Government Oriental Library Series.

BIBLIOTHECA SANSKRITA—No. 3.

# माधवीया धातुवृत्तिः.

## THE DHÁTUVṚITTI OF MÁDHAVÁCHÁRYA.



### Vol. II—Part I.

EDITED BY

A. MAHA'DEVA S'A'STRI, B. A.,

*Curator, Government Oriental Library, Mysore.*

Published under the Authority of the Government of His Highness the Maharaja of Mysore.

MYSORE:

PRINTED AT THE GOVERNMENT BRANCH PRESS,

1894.

## PREFACE.

The Dhátuvṛitti is a well-known work of Mádhaváchárya on Sanskrit Grammar, though complete and correct manuscript copies of the work appear to be very rare even in Southern India, the home of the author. It is a most complete and thorough treatise on the conjugation of verbs, the most difficult portion of Sanskrit Grammar, and forms a sort of commentary on the Dhátupáṭha, a classified collection of verbal roots said to have been compiled by Páṇini himself, but afterwards improved by Bhímasenáchárya who added the meaning of such roots as were left unexplained by Páṇini. Under each verbal root are explained all such conjugational and derivative forms as may present any difficulty of explanation according to Páṇini's system. Many a word of doubtful etymology are thus analysed and explained. The author often cites and criticises the views of various other authorities on the subject, belonging to the same school or to other schools of Sanskrit Grammar such as those of S'ákaṭáyana, Indra and Chandra. He also quotes, in support of his own views, illustrative passages from such standard authors as Káḷidása and Báṇa. The following are some of the names met with in the present volume :—

| | |
|---|---|
| A'bharaṇakára (119)* | Daurgas (66) |
| A'piśala (87) | Dhanapála (68) |
| A'treya (62) | Dhátupáráyaṇa (96) |
| Bhárata (245) | Dhátupradípa (157) |
| Bháshya (62) | Haradatta (62) |
| Bhaṭṭi (107) | Indra (149) |
| Bhaṭṭabháskara (62) | Kaiyaṭa (62) |
| Bhoja (151) | Káśyapa (65) |
| Bodhinyása (37) | Kátantrasútras (173) |
| Chándras (146) | Kaumára (263) |

*The figure indicates the page on which the name occurs.

Kaṭaka (68)*
Kshapaṇaka (254)
Kshírasvámin (62)
Mágha (78)
Maitreya (62)
Murári (145)
Nandin (68)
Nyása (64)
Padamañjarí
Padaseshakára (110)
Páráyaṇikas (62)
Purushakára (151)
Raghuvaṃśa (197)
Rámadeva (249)
Śákaṭáyana (65)
Śákyamuni (146)
Sammatá (65)
Śábarabháshya (68)
Síradeva (150)
Subhútichandra (254)
Sudhákara (62)
Svámin (68)
Taraṅgiṇíkára (176)
Uṇádivritti (69)
Vákyamañjarí (256)
Vardhamána (87)
Vásavadattá (141)
Vistara (157)
Vritti (62)
Vyághrabhúti (101)
Vyákhyátris (86)

A complete alphabetical list of such names will be appended at the close of the work.

A portion of the Dhátuvritti appeared in the Vols. IV—VIII of the *Pandit*, a monthly publication of the Benares Sanskrit College devoted to Sanskrit Literature. For want of complete and correct MSS. the editors could not proceed beyond the end of the *Bhvádi*, which forms nearly one half of the whole work. Since parts of it have been so printed that they cannot be separated from other works published along with it in the magazine, even the published portion of the work has been rendered very costly and is not accessible to many a student to whom it will be invaluable as a work of [illegible] to render [illegible] and useful work of easy [illegible] to the public that a complete edition of it prepared from a collation of the MS. copies in the Government [illegible] has been admitted into this series. I have [illegible] [illegible]ádi so as to continue the work from where the

*The figure indicates the page on which the name occurs.

Pandit stopped it, though the *Bhvádi* section will also be issued sooner or later.

In editing the portion comprised in this part, the following MSS. belonging to the Government Oriental Library have been consulted :—

क.—A recent but very correct MS. written on palm-leaf in Telugu character. It comprises the portion extending from the *adádi* to the end of the work. No. 116.

ख.—An old correct MS. written on palm-leaf in Telugu character. It comprises the portion extending from the beginning of the work to very near the end of the *tudádi*. No. 215.

ग.—A somewhat recent MS. written on palm-leaf in Telugu character, perhaps of the same source as क. It extends from the *juhotyádi* to very near the end of the work. No. 655.

This edition has been prepared chiefly with the aid of Panditaratnam K. Rangacharya, Sanskrit Pandit of the Oriental Library.

MYSORE,
*August* 1894.

A. MAHA'DEVA S'ASTRI.



# विषयसूचिका.

## २. अदादयः.

---

हरिः ओम्.




# माधवीया धातुवृत्ति

## अदादिः.

ओं नमः पाणिनिकात्यायनपतञ्जलिभ्यो मुनिभ्यो महद्भ्यो गुरुभ्यः.

## अद भक्षणे ॥ १ ॥

अत्ति अत्तः अदन्ति अत्सि अत्थः अत्थ अद्मि अद्वः अद्मः— 'अदिप्रभृतिभ्यश्शपः' इति शपो लुक् । 'खरि च' इति चर्त्वम् ॥

जघास जक्षतुः जक्षुः जघसिथ जक्षथुः जक्ष जघास जघस जक्षिव—'लिट्यन्यतरस्याम्' इत्यदेः पक्षे घस्लादेशः । णिति वृद्धिः । उत्तमे तु णिद्विकल्पः । अपित्सु 'असंयोगाल्लिट्कित्' इति कित्त्वे 'गमहन' इत्युपधालोपः । तस्य 'द्विर्वचनेऽचि' इति स्थानिवत्त्वाद्द्विर्वचनम् । 'शासिवसिघसीनां च' इति सकारस्य इण्कोः परत्वे षत्वम् । अत्रोपधालोपस्य पूर्वस्मादपि विधाविति न स्थानिवत्त्वम्, षत्वविधानवैयर्थ्यप्रसङ्गात् । 'पूर्वत्रासिद्धे न स्थानिवत्' इति वा न भवति । घकारस्य 'खरि च' इति चर्त्वे ककारः । अत्राप्युपधालोपस्य न स्थानिवत्त्वम्, 'न पदान्त' इत्या-

दिना वा 'पूर्वत्रासिद्धे न स्थानिवत्' इत्येव वा तन्निषेधात्। 'अचस्तास्वत्' इति थलीण्णिषेधस्तासौ सत इत्युक्तम्। तेन घस्लादेशस्य तासावसत्वान्नात्र स निषेधः। अत एव तद्विषयो भारद्वाजनियमोपि न भवति। अथवा--स्थानिवद्भावात् 'इडत्त्यर्ति' इति नित्यमिड्भविष्यति। नन्वस्ति प्रकृत्यन्तरं घसिस्तासौ सन् नित्यानिट्; तस्मात्थलि जघस्थेति दुर्वारम्। मैवम्, प्रकृत्यन्तरस्य घसेर्यत्र लिङ्गं वचनं वास्ति तत्रैव प्रयोगो न सर्वत्रेति तत्रैव धातावुपपादितत्वात्। अतो नास्ति लिटि प्रयोगः। घस्लादेशाभावे आद आदतुः आदिथ आदिव--क्रयादिनियमादिट्। थलि भारद्वाजनियमः 'इडत्त्यर्तिव्ययतीनाम्' इति बाध्यते। 'अत आदेः' इत्यभ्यासादेर्दीर्घः॥

अत्ता अत्तासि अत्तास्मि। अत्स्यति अत्स्यसि अत्स्यामि। अत्तु अत्तात् अद्धि अदानि॥

आदत् आदः आदम्--'अदस्सर्वेषाम्' इत्यदोङ्गात्परस्य सार्वधातुकापृक्तस्याडागमः॥

अद्यात् अद्याः अद्याम्--आशिषि सलोपाभावो विशेषः। अद्यास्तामित्यादि॥

अघसत् अघसतां अघसन् अघसः अघसतं अघसत अघसं अघसाव--'लुङ्सनोर्घस्लृ' इति घस्लादेशो लृदित्वात्

जिघत्सति——घस्लादेशो 'सस्यार्धधातुके' इति तत्त्वम्॥

आदयतेऽन्नं देवदत्तेन आदयतीति वा। आदिदत आदिदत्——णिलोपस्य स्थानिवत्त्वाद्दिशब्दस्य द्विर्वचनम्। 'निगरण-चलन' इति कर्त्रभिप्रायेऽपि प्राप्तस्य परस्मैपदस्य 'अदेः प्रतिषेधः' इति निषेधः। 'अन्तिखाद्योः प्रतिषेधः' इति प्रयोज्यस्य कर्मत्वनिषेधः॥

व्यत्यत्ते व्यत्यदाते व्यत्यदते——'कर्तरि कर्मव्यतिहारे' इति तङ्। 'आत्मनेपदेष्वनतः' इति झस्यादादेशः, अन-कारान्तादङ्गात्परत्वात्। 'व्यत्यदन्ति वृका मेषान्' इति हिंसायां द्रष्टव्यम्। तत्र हि 'न गतिहिंसा' इति तङ्नि-षिध्यते॥

व्यतिजक्षे। व्यत्यादे। व्यत्यत्ता। व्यत्यत्स्यते। व्यत्यत्ताम्। व्यत्यात्त। व्यत्यदीत। आशिषि व्यत्यत्सीष्ट॥

व्यत्यघत्त——'सस्यार्धधातुके' इति तत्वे 'झलो झलि' इति सिचो लोपः॥

कर्मणि अद्यत इत्यादि॥

अदती——शत्रन्तात् 'उगितश्च' इति ङीप्। नित्य-त्वादन्तरङ्गत्वाच्च नुमः पूर्वं शपो लुगिति 'शप्श्यनोः' इति नुमत्र न भवति। न च प्रत्ययलक्षणमस्ति, तत्रादित्य-धिकाराद्वर्णाश्रयत्वाद्वर्णाश्रये च तन्निषेधात्॥

जग्धः। प्रजग्ध्य——'अदो जग्धिर्ल्यप्ति किति' इति जग्ध्यादेशः॥

पुत्रो जग्धो यया पुत्रजग्धी—'राजदन्तादिषु परम्' इति निष्ठान्तस्य परनिपातः। 'अस्वाङ्गपूर्वपदाद्वा' इत्यस्वाङ्गवाचिपूर्वपदात् क्तान्तादन्तोदात्ताद्बहुव्रीहेर्वा ङीष्। 'वाहतजग्धपरेषु' इति पुत्रतकारस्य वा द्वित्वम्॥

अन्नं लब्धा आन्नः—'अन्नाण्णः' इति द्वितीयान्ताल्लब्ध इत्यर्थे णप्रत्ययः। अत एवान्नादिति निर्देशात्संज्ञायां न जग्ध्यादेशः॥

सर्वप्रकारमन्नं भक्षयति सर्वान्नीनो भिक्षुः—'अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु' इति द्वितीयान्तादस्माद्यथासङ्ख्याद्भक्षयतीत्यर्थे णः॥

काकादनी। गवादनी—लिटि गौरादित्वात् ङीष्।

प्रात्तीति प्रघसः—अच्; 'अच्युपसङ्ख्यानम्' इति घस्लादेशः॥

सस्यमत्तीति सस्यात्—'अदोनन्ने' इति अन्नादन्यस्मिन् कर्मण्युपपदे विट्। अन्ने तूपपदे कर्मणि अन्नादः सस्यादः इति वासरूपेणाणि॥

क्रव्यात्—'क्रव्ये च' इति विट्। 'अदोनन्ने' इत्येव सिद्धे पुनर्विधानं वासरूपबाधनार्थमिति भाष्यादौ स्थितम्। क्रव्यादशब्दस्तु कृत्तविकृत्तपक्कमांसशब्द उपपदेणि पृषोदरादित्वादुपपदस्य क्रव्यभाव इति वृत्त्यादौ। 'व्याघ्रै गुहाशयैः क्रूरैः क्रव्यादैस्सनिशाचरैः' इत्याममांसभक्षे व्या-

ग्रादौ भट्टिप्रयोगश्चिन्त्यः । 'राक्षसः कौणपः क्रव्यात्क्रव्यादः' इत्यत्र कृत्तविकृत्तपक्वमांसस्यापि भक्षणं सम्भवतीति क्रव्यादव्यवहारः ॥

पुत्रादिनी—'सुप्यजातौ' इति णिनिः । अत्र पुत्रतकारस्य प्राप्तं 'अनचि च' इति द्वित्वं 'नादिन्याक्रोशे पुत्रस्य' इत्यादिनूशब्द उत्तरपदे आक्रोशे गम्यमाने नेति निषिध्यते । 'तत्परपरे च' इति वचनात् पुत्रपुत्रादिनीत्यत्रापि द्वित्वं न भवति ॥

अद्मरः—'सृघस्यदः' इति क्मरच् ॥

घासः—'अकर्तरि च कारके' इति घञि घस्लादेशः ॥

महत्या घासो महाघासः—'महदात्वे घासकरविशिष्टेषूपसङ्ख्यानम्' इति पुंवद्भावः आत्वं च ॥

विघसः—'उपसर्गेऽदः' इत्यप् । नौ तूपपदे 'नौ ण च' इत्यब्णौ द्वौ भवतः । न्यादः । निघसः—'घञपोश्च' इत्यपि घस्लादेशः ॥

अन्धोऽन्नम्—'अदेर्नुम् धश्च' इत्यसुनि नुमागमः, दकारस्य च धत्वम् ॥

अत्त्री अत्ता राक्षसादिरित्युच्यते, अत्रिः ऋषिः—'अदेस्त्रिनि च' इति त्रिनित्रिप्प्रत्ययौ । त्रिनेरिकारो नकारपरित्राणार्थः ॥

अत्रेरपत्यमात्रेयः—'इतश्चानिञः' इति ढक्। अस्य बहुत्वे 'अत्रिभृगुकुत्स' इति लुकि अत्रयः इति भवति ॥

अद्यते फलमूलादिकमत्रेत्यद्रिः—'अदिसदिभूशुभिभ्यः क्रिन्' इति क्रिन्प्रत्ययः ॥

अध्वा—'अदेर्ध च' इत्यदः क्वनिप्, दकारस्य च धकारः ॥

अध्वानमलं गच्छतीत्यध्वन्यः अध्वनीनः—'अध्वनो यत्खौ' इति द्वितीयान्तादलंगामीत्यर्थे यत्खौ। यति 'ये चाभावकर्मणोः' इति, खे तु 'आत्माध्वानौ खे' इति, प्रकृतिभावः ॥

विहीनोऽध्वा व्यध्वः। एवं दुरध्वः—'उपसर्गादध्वनः' इत्यच् समासान्तः। उपसर्गग्रहणं प्रादुपलक्षणम् ॥

प्राध्वंशब्दो मान्तोऽव्ययमानुकूल्ये वर्तते ॥

## हन हिंसागत्योः ॥ २ ॥

हन्ति हतः घ्नन्ति हन्सि हथः हन्मि हन्वः—झलादौ क्ङिति 'अनुदात्तोपदेश' इत्यनुनासिकलोपः। झावन्तरङ्गत्वादन्तादेशे अजादित्वात् 'गमहन' इत्युपधालोपे 'हो हन्तेर्ञ्णिन्नेषु' इति ञिति णिति प्रत्यये णकारे च परे कुत्वविधानात् सोष्मणो घोषवतो नादवतो महाप्राणस्य हकारस्य तादृशो घकारः। अत्रोपधालोपस्य स्थानिवत्त्वं

नकारे परतः कुत्वविधानसामर्थ्यान्न भवति । सत्यपि वा स्थानिवत्त्वे ईदृशं व्यवधानं वचनसामर्थ्यात् आश्रयिष्यते ॥

जघान जघ्नतुः जघन्थ जघनिथ जघ्नथुः जघान जघन जघ्निव—क्रयादिनियमादिट् । थलि भारद्वाजनियमाद्विकल्पः । अचि यत्रोपधालोपस्तत्र तस्य 'द्विर्वचनेचि' इति स्थानिवत्त्वाद्द्विर्वचनम् ॥

जघ्निवान् जघन्वान्—'विभाषा गमहनविदविशाम्' इति क्वसोरिड्विकल्पः । इटि 'गमहन' इत्युपधालोपे 'हो हन्तेः' इति कुत्वम् । अनिटि 'अभ्यासाच्च' इत्यभ्यासादुत्तरस्य हन्तिहकारस्य कुत्वम् । चान्द्रास्तु भाषायामस्य प्रयोगमिच्छन्ति ॥

हन्ता । हनिष्यति—'ऋद्धनोस्ये' इतीट् ॥

हन्तु हतात् हतां घ्नन्तु जहि हतात् हतं हनानि—तातङि तस्य ङित्त्वादनुनासिकलोपः । हौ 'हन्तेर्जः' इति जादेशः । अस्य 'असिद्धवदत्राभात्' इत्यसिद्धत्वात् 'अतो हेः' इति लुङ्न भवति । हतात् त्वमित्यत्र जादेशात्परत्वात् तातङि तस्य स्थानिवद्भावेन हित्वात् पुनर्जादेशः सकृद्गतपरिभाषया न भवति ॥

अहन् अहतां अघ्नन् अहन् अहतं अहनं अहन्व—'हल्ङ्याभ्यः' इति तिस्योर्लोपः ॥

हन्यात् हन्यातां हन्युः हन्यां हन्याव । आशिषि वध्यात् वध्यास्तां वध्याः वध्यास्तं वध्यासम्—'हनो वध-लिङि' 'आर्धधातुके' इति वधादेशो ण्यल्लोपेत्यादिना 'अ-कृत्सार्वधातुकयोः' इति दीर्घमतोलोपो बाधते ॥

अवधीत् अवधिष्टां अवधिषुः अवधीः अवधिषं अव-धिष्व—'लुङि च' इति वधादेशः । अल्लोपस्य स्थानि-वत्त्वाद्धलन्तलक्षणा वृद्धिर्न भवति । वधादेशस्यानेकाच्त्वात् उदात्तत्वनिपातनादनुदात्तत्वाभावाद्वा सिचो वलादिलक्षण इडभवति ॥

यङ्लुगन्तस्यापि हन्तेः लुङ्लिङोः प्रकृतिग्रहणन्यायेन व-धादेशो वध्यात् अवधीत् इत्येव रूपम् । अत्रादेशस्य स्था-निवत्त्वेन यङन्तत्वाद्द्विर्वचनं स्यादिति न वाच्यम् । एवं हि प्रकृतिगतं साभ्यासत्वमप्यतिदिश्येत, ततश्च 'अनभ्यास-स्य' इति निषेधस्स्यात् ॥

आहते आघ्नाते आघ्नते आहसे आघ्नाथे आहध्वे आघ्ने आहन्वहे—पूर्ववज्झलादावनुनासिकलोपः । अजादौ तूपधा-लोपः । 'आङो यमहनः' इत्यकर्मकात् स्वाङ्गकर्मकाच्च तङ् ॥

आजघ्ने आजघ्नाते आजघ्निषे । आहन्तासे । आहनिष्यते ।

आहतां आघ्नातां आहन्व आहनै—आटि पित्वान्नोपधा-लोपः ॥

आहत आघ्नातां आहथाः आघ्नि आहन्वहि ॥

आघ्नीत आघ्नीयातां आघ्नीथाः आघ्नीय–लिङस्सलोपः ॥

आशिषि, आवधिषीष्ट आवधिषीयास्तां–' हनो वध लिङि ' इति वधादेशो इडागमः ॥

आवधिष्ट आवधिषातां आवधिष्ठाः आवधिढ्वं आवधिषि– ' आत्मनेपदेष्वन्यतरस्याम् ' इति पक्षे वधादेशः । अन्यदा, आहत आहसातां आहथाः आहध्वं आहसि आहन्वहि ––अत्र ' हनस्सिच् ' इति झलादेरात्मनेपदपरस्य सिचः कित्त्वादनुनासिकलोपे ' ह्रस्वादङ्गात् ' इति झलि सिचो लोपः ॥

' आङो यमहनः ' इत्यकर्मकात्स्वाङ्गकर्मकाच्च तङित्युक्तम् । तत्र कथं ' आजघ्ने विषमविलोचनस्य वक्षः ' इति ?। अत्र केचित् ' आज ' इति पदं छित्त्वा घ्न इति भावे क्विपि चतुर्थ्येकवचनान्तमुक्त्वा घ्ने हन्तुं आज आजगाम इत्यर्थः इति समर्थयन्ते–तदयुक्तम् , ' अजेर्व्यघञपोः ' इति लिट्यार्धधातुके वीभावेन भाव्यत्वात् । अन्ये तु–विषमविलोचनस्य समीपमेत्य स्वं वक्ष आस्फालितवान् इत्यर्थः ; मल्लो ह्युत्साहाविष्करणाय स्वं वक्ष आस्फालयतीति । भागवृत्तौ तु नैवायं साधुरिति ' आपेदे ' इति पाठान्तरमुक्तम् । एवं च ' मोदाहध्वं रघूत्तमम् ' इति भट्टिप्रयोगोपि चिन्त्यः । तथा ' मदर्थेरीन् निजघ्निथ ' इति च–अत्र सिपः पित्त्वात् ' असंयोगाल्लिट्कित् ' इत्यत्र

चापिदित्यधिकारात् कित्त्वाभावादुपधालोपोपि दुर्लभः । अ-पिदधिकारश्च 'इन्धिभवतिभ्यां च' इत्यत्र भवतिग्रहणा-दृज्ञायते । तथा च तत्र वार्त्तिकं 'इन्धेस्संयोगार्थं वचनं भवतेः पिदर्थम्' इति ॥

'आङो यमहनः' इति तङ् प्रकृतिग्रहणन्यायेन यङ्लु-गन्तादपि भवतीति आजङ्घ्ने आजङ्घ्नाञ्चक्रे इत्यादि भवति । अत्रापि लिङ्लुङोर्वधादेशे प्रकृतिवदेव रूपं आवधिषीष्ट आवधिष्ट इति । लुङि वधादेशाभावे आजङ्घनिष्ट इत्यादि— 'हनस्सिच्' इत्यत्र झलित्यधिकारादिडादेरकित्त्वादुपधालोपा-भावः ॥

जिघांसति——'अज्झनगम' इति दीर्घः । 'अभ्यासाच्च' इति कुत्वम् ॥

जङ्घन्यते——'नुगतोनुनासिकान्तस्य' इति नुक् । इदं चानुस्वारोपलक्षणार्थम् पदान्तवदिति च प्रागेवोक्तम् । तेन 'वा पदान्तस्य' इति परसवर्णो विकल्पेनोदाहार्यः । यङि 'हन्तेर्हिंसायां घ्नीभावो वक्तव्यः' इति घ्नीभावविधानात् हिंसायां जेघ्नीयते इति भवति ॥

जङ्घनीति जङ्घन्ति जङ्घतः जङ्घ्नति । अत्र सुधाकरः—'के पुनरनुदात्तोपदेशाः यम्यादयः' इति व्याख्यातृभिर्गणत्वेन निर्देशात् 'निर्दिष्टं यद्गणेन च' इति यङ्लुक्यनुनासिकलो-पाभावात् 'अनुनासिकस्य' इति दीर्घे जङान्त इत्युक्त्वा न

क्वचिदाचार्येणानुदात्तोपदेशानां गणेन निर्देशः कृत इति भवितव्यमेवानुनासिकलोपेनेत्याह । 'हन्तेर्जः' इत्यत्र न्यासे च हन्तेरिति तिपा निर्देशाद्यङ्लुकि जभावाभावात् जङ्घहि इति भवतीति क्ङित्यनुनासिकलोपः प्रत्युदाहृतः । 'असिद्धवदत्र' इत्यनुनासिकलोपस्यासिद्धत्वाद्धिलुङ्न भवति । अत्रात्रेयो न्यासे प्रत्युदाहरणं जङ्घनि[नी]हि इति पठन् भाषायां हेरपित्त्वात् ईडभावाच्छान्दसमुदाहरणमित्याह ॥

घातयति अजीघतत्—'हनस्तोचिण्णलोः' इति त्रिति णिति प्रत्यये चिण्णल्वर्जिते परे नकारस्य तकारः । प्रकृतिग्रहणंन्यायेन यङ्लुगन्तेपि तत्वे जङ्घातयति ॥

कर्मणिहन्यते । जघ्ने । हन्ता घानिता । हनिष्यते घानिष्यते । हन्यताम् । अहन्यत । हन्येत । आशिषि घानिषीष्ट वधिषीष्ट । अवधि अघानि अवधिषातां अहसातां अघानिषातां इत्यादि—स्यादिषु चिण्वद्भावपक्षे वृद्धिकुत्वे । नन्ववधीत्यत्र चिणि वधभावो दृश्यत इति चिण्वद्भावेन स कस्मान्नातिदिश्यते ? उच्यते । नात्र चिणि दृष्टमात्रमतिदिश्यते किन्तु आङ्गं चिणि दृष्टमिति वधादेशो न भवति । लिङ्लुङोः कर्तृवद्वधादेशतद्विकल्पौ । लिङि चिण्वत्पक्षे वधादेशो न भवति यतश्चिण्वदिटा परेण पूर्वं बाध्यते, कृते च सकृद्गतिपरिभाषया । ननु द्वितीयेध्याये 'आर्धधातुके' इति विषयसप्तमी ; तेन प्रागेव प्रत्ययोत्पत्तेः वधभावेन

भाष्यम् । चिण्वद्भावस्तु भावकर्मविषयेषु स्यादिषु परतो विधीयत इति कथमन्तरङ्गबहिरङ्गयोर्विप्रतिषेधः । नैष दोषः। यत्रार्धधातुकसामान्यं निमित्तत्वेनोपादीयते 'अस्तेर्भूः' इत्यादौ तत्रैव विषयसप्तम्याश्रयणात्, न पुनर्यत्र विशेष उपादीयते 'हनो वध लिङि' इत्यादौ तत्रापीति । उक्तं चैवं चिण्वत्सूत्रे व्याख्यातृभिः । वार्तिकं च 'वधभावात्सीयुटि चिण्वद्भावो विप्रतिषेधेन' इति । कैय्यटे* तु विषयसप्तम्याश्रयणेनापि परिहार उक्तः । यथा—"एकाच उपदेशेनुदात्तादित्यत्र वक्ष्यति भाष्यकारः । 'वधिषीष्ट इत्यत्र निपातनस्वरं प्रत्ययस्वरो बाधिष्यते । आर्धधातुकीयास्सामान्येन भवन्ति' इत्येवं ब्रुवता लुङीति विषयसप्तम्येवाभ्युपगता । ततश्चान्तरङ्गत्वाद्वधभावः प्राप्नोति । प्रतिपदविधेर्बलीयस्त्वाच्चिण्वद्भावो भवति" इति ॥

कर्मकर्तरि आहते माणवकस्स्वयमेव, आवधिष्ट माणवकस्स्वयमेवेत्यत्र 'यक्चिणोः प्रतिषेधे' इत्यादिना तयोर्निषेधात् शप्सिचौ भवतः । अत्र हरदत्तेन† "आत्मनेपदविधावकर्मका ये धातवो निर्दिष्टास्ते यदान्तर्भावितण्यर्थास्सकर्मका भवन्ति न आत्मनेपदाकर्मकाः आहन्ति माणवकमिति । तदा सकर्मकत्वादनुदाहरणमिति केचित् । अन्येत्वात्मनेपदाकर्मकेति धातूपलक्षकत्वात् कर्माविवक्षायामात्मनेपदस्य निमित्तत्वात्सकर्मकेप्यविरुद्धमुदाहरणमित्याहुः । इदमत्राविगीतमुदाहरणम् 'वेश्शब्दकर्मणः' 'अकर्मकाच्च' विकुर्वते सैन्धवाः, वल्गन्ती-

*६-४-६२. †३-१-८९.

त्यर्थः । तान् यदान्यो वल्गयति तदा तेषां कर्मत्वम् । पुनस्सौकर्यातिशयाय कर्तृत्वविवक्षायां विकुर्वते सैन्धवाः स्वयमेव वल्गन्ति " इत्युक्तम् ॥

चोरस्य निप्रहन्ति, चोरस्य निहन्ति, चोरस्य प्रहन्ति, चोरस्य प्रणिहन्ति—अत्र ' नेर्गद ' इति णत्वम्, ' जासिनिप्रहण ' इति कर्मणि शेषे षष्ठी । तत्र निप्रग्रहणं सङ्घातविगृहीतविपर्यस्तार्थमित्युक्तम् ॥

प्रहन्मि प्रहण्मि प्रहन्वः प्रहण्वः प्रहन्मः प्रहण्मः—अत्र ' हन्तेरत्पूर्वस्य ' इति उपसर्गस्थान्निमित्तात्परस्य अत्पूर्वस्य हन्तिनकारस्य विधीयमानं णत्वं प्रहण्यते प्रहणानीत्यादाविव नित्यं प्राप्तं ' वमोर्वा ' इति मकारवकारयोः परयोः विकल्प्यते । प्राघानीत्यत्र ' अत्पूर्वस्य ' इति तपरकरणाण्णत्वस्य न प्रसङ्गः । प्राहन्नित्यत्र तु ' पदान्तस्य ' इति निषेधः । प्रहन्तीत्यत्र अनुस्वारे कर्तव्ये णत्वं ' पूर्वत्रासिद्धम् ' इति न भवति । कृते परसवर्णे तस्यासिद्धत्वात्पुनर्णत्वं न भवति । ' अन्तश्शब्दस्याङ्किविधिणत्वेषूपसङ्ख्यानम् ' इत्युपसर्गसंज्ञोपसङ्ख्यानात् तत्पूर्वस्यापि सर्वमिदं णत्वं द्रष्टव्यम्, अन्तर्णिहन्तीत्यादि । एवं च ' अन्तरदेशे ' इति हनो नकारस्य णत्ववचनं अर्थाद्देशे णत्वनिषेधार्थं भवति, अन्तर्हननो नाम बाहीकेषु देशविशेषः । अन्यत्रान्तर्हणनमिति णत्वं भवति, मध्ये हननमित्यर्थः । सर्वमिदं णत्वं श्तिपा निर्देशाद्यङ्लुकि न भवति, प्रनिजङ्घतीत्यादि । ' जासिनिप्रहण ' इति ष-

ष्ठी तु भवत्येव , चोरस्य प्रनिजङ्घतीत्यादि ॥

अन्तर्हत्य, मध्ये हत्वेत्यर्थः—'अन्तरपरिग्रहे' इत्यन्तरो गतित्वात् 'कुगतिप्रादयः' इति तत्पुरुषे ल्यपि 'वा ल्यपि' इत्यनुनासिकलोपे तुक् । वाग्रहणस्य व्यवस्थितविभाषात्वान्मान्तेषु विकल्पितोनुनासिकलोपोन्यत्र नित्य इत्युक्तम् । परिग्रहे तु अगतित्वात् अन्तर्हत्वा मूषिकां श्येनो गत इति भवति, परिगृह्येत्यर्थः । अत्र न्यासोद्योते 'अन्तश्शब्दो धातोः परिग्रहे वृत्तिं करोति' इति । एवं च अन्तरपि परिग्रहस्यैव द्योतक इत्युक्तं भवति ॥

कणेहत्य पयः पिबति, मनोहत्य पयः पिबति—'कणे मनसी श्रद्धाप्रतीघाते' इति कणेमनश्शब्दयोर्गतित्वे समासादि पूर्ववत् । अत्र 'कणेशब्दः सप्तमीप्रतिरूपको निपातोऽभिलाषातिशये वर्तते । मनश्शब्दोपि साहचर्यादभिलाषावृत्तिरेव' इति न्यासपदमञ्जर्यौ । हन्तिरत्रावधीकरणाङ्गे निवृत्तौ वर्तते । सा च सन्निधानात्कणेमनश्शब्दार्थयोः । तौ च निवर्त्यमानतया अवधी इति तयोः प्रतिघातो विषयतया विशेषणम् । तदयमर्थः, अभिलाषनिवृत्तिपर्यन्तं पयः पिबतीति । उक्तं च न्यासोद्योते 'हन्तिरवधीकरणाङ्गे निवृत्तौ वर्तते अभिलाषनिवृत्तिमवधीकृत्य पयः पिबतीत्यर्थः' इति । हरदत्तोपि 'अतिशयेन अभिलष्य तन्निवृत्तिपर्यन्तं पयः पिबतीत्यर्थः' इति । एवं चात्राभिलाषनिवृत्तेः अवधीकरणस्य पयःपानात्पूर्वत्वात् क्त्वोपपत्तिः । श्रद्धाप्रतिघातादन्यत्र कणे हत्वा मनो हत्वा । कणशब्दस्सूक्ष्मे तण्डुलावयवे

वर्तते । मनश्शब्दस्तु चेतसि । योगद्वयमिदं अर्थस्वभावाद्धन्तिविषयम् ॥

वध्यः—' हनो वध च ' इति कर्मणि यत्, तत्सन्नियोगेन वधादेशश्च ॥

घात्य इति ण्यति ॥

ब्रह्महत्या—' हनस्त च ' इत्यनुपसर्गे सुप्युपपदे क्यपि तत्सन्नियोगेन नकारस्य तकारः । सोपसर्गादनुपपदाच्च नायं विधिरिति घातस्सङ्घात इति घञ् भवति । ' तयोरेव ' इति भावलक्षणो ण्यदत्रानभिधानान्न भवतीत्यात्रेयः ॥

असिहत्यायां भवं आसिहात्यम्—' अनुशतिकादीनां च ' इत्युभयपदवृद्धिः । तत्र केचित् अश्वहत्येति पठन्ति । ततो विमुक्तादित्वात् अश्वहत्याशब्दोस्मिन्नध्यायेऽस्तीति आश्वहात्य इति भवति । ' हत्याशतं पानसहस्रम् ' इत्यादावनुपपदे क्यबार्षः ॥

घनाघनः—' हन्तेर्घत्वं च ' इत्यचि द्विर्वचनमभ्यासस्यागागमः हकारस्य च घकारः परस्य ' अभ्यासाच्च ' इति कुत्वम् । आको दीर्घोच्चारणसामर्थ्यान्न हलादिः शेषः । यदि हि स्यादकमेव विदध्यात्, सवर्णदीर्घेणाकारो भविष्यति । पररूपं त्वग्विधानसाम*र्थ्यान्न भविष्यति ॥

शत्रुहः, शत्रुं वध्यादित्यर्थः—' आशिषि हनः ' इत्या-

---

*ख—वैय्य.

शिषि गम्यमानायां कर्मण्युपपदे डप्रत्ययः । डित्त्वसामर्थ्या ट्टिलोपः ॥

दारां हन्तीति दारांघाटः—'दारावाहनोणन्त्यस्य च टस्संज्ञायाम्' इत्याङ्पूर्वाद्धन्तेः कर्त्तर्यण्, नकारस्य च टकारः ॥

चारां हन्तीति चारांघाटः—'चारौ वा' इति चारौ कर्मण्युपपदेण्प्रत्यये नकारस्य वा टकारः । तदभावे 'हनस्तोचिण्णलोः' इति तत्वम् । क्रियाविशेषणत्वाच्चारोः कर्मत्वम् ॥

वर्णान् संहन्तीति वर्णसङ्घाटः वर्णसङ्घातो वा—'कर्मणि समि च' इति कर्मणि समि चोपपदेणि वान्त्यस्य टकारः ॥

क्लेशापहः तमोपहः—'अपे क्लेशतमसोः' इति क्लेशतमसोः कर्मणोरुपपदयोः अपपूर्वाद्धन्तेर्डः । 'स्रगियं यदि जीवितापहा' इति प्रयोगस्तु 'क्विप्च' इति सार्वकालिके क्विपि । 'ऋन्नेभ्यः' इति ङीप् न भवति । बह्वादिषु ङीष्विकल्पार्थं 'हन्' इति पाठात् । यदि हि ङीषभावे ङीप् स्यात् गौरादिष्वेव 'हन्' इति पठित्वा नित्यं ङीषमेव विदध्यात् । अथवा तदपि न कुर्यात् ङीपैव सिद्धत्वात् । नात्र ङीष्ङीपो रूपे विशेषोस्ति । नापि स्वरे । जीवितापहशब्दस्य 'गतिकारकोपपदात्कृत्' इत्युत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वेऽनुदात्तस्य ङीपः 'अल्लोपो नः' इत्यु-

दात्तलोपनिमित्तस्य 'अनुदात्तस्य च यत्रोदात्तलोपः' इत्युदात्तत्वात्। तस्माद्बह्वादिषु 'हन्' इति ङीब्विकल्पसामर्थ्यात् तदभावे ङीब्नभवति। ज्वरापहादिवत् 'अन्येष्वपि दृश्यते' इति डो वा॥

कुमारघाती, शीर्षघाती—'कुमारशीर्षयोर्णिनिः' इत्यनयोः कर्मणोरुपपदयोः हन्तेः कर्तरि णिनिः, अस्मादेव निर्देशात्प्रत्ययसन्नियोगेन शिरसश्शीर्षभावः॥

जायाघ्नो ब्राह्मणः, जायाहननहेतुलक्षणयुक्त इत्यर्थः। एवं पतिघ्नी वृषली। 'लक्षणे जायापत्योष्टक्' इत्यनयोः कर्मणोरुपपदयोर्हन्तेर्हननलक्षणवति कर्तरि टक्। लक्षणमात्र* उत्तरसूत्रेण सिद्धत्वात्तद्वानिह लक्षणशब्देनोच्यते। किन्त्वात् 'गमहन' इत्युपधालोपः टित्त्वात् ङीप्। जायाघ्नस्तिलकालकः, पतिघ्नी पाणिरेखा, श्लेष्मघ्नं मधु, 'अमनुष्यकर्तृके च' इति कर्मण्युपपदे मनुष्यादन्यकर्तृके हन्त्यर्थे टक्। मनुष्ये त्वणेव—आखुघातश्शूद्र इति। कृतघ्नो ब्रह्मघ्नो गोघ्न इत्यादिषु 'कृत्यल्युटो बहुलम्' इति बहुळवचनाट्टक्। मूलविभुजादिपाठात्क इत्येके। अनयोस्स्त्रियां विशेषो ङीप्टाभ्याम्। चोरघाती हस्तीत्यत्र अमनुष्येपि कर्तर्यस्मादेव बहुळवचनादण्भवति। हस्तिघ्नो भटः हस्तिहनने शक्त इत्यर्थः, एवं कवाटघ्नश्चोरः—'शक्तौ हस्तिकवाटयोः' इत्येनयोः कर्मणोरुपपदयोश्शक्तौ गम्यमानायां हनष्टक्। अशक्तौ विषेण हस्तिनं हन्ति हस्तिघात इत्यण् भवति। पाणिघस्ताडघशि-

*ख—मात्रस्य.

ल्पिविशेषौ 'पाणिघताडघौ शिल्पिनि' इति पाणिताडयोः कर्मणोरुपपदयोः हन्तेष्टक् टिलोपो घत्वं च निपात्यते । शिल्पिनोऽन्यत्र पाणिघातः । सूत्रद्वयमिदं मनुष्यकर्तृकार्थम् । राजानं हन्ति राजघस्तीक्ष्ण उच्यते । 'राजघ उपसङ्ख्यानम्' इति पूर्ववन्निपात्यते ॥

पितृव्यं हतवान् पितृव्यघाती—'कर्मणि हनः' इति कर्मण्युपपदे कुत्सिते कर्तरि भूते णिनिः । अकुत्सिते चोरघात इत्यणेव ॥

ब्रह्माणं हतवान् ब्रह्महा, एवं भ्रूणहा, वृत्रहा—'ब्रह्मभ्रूणवृत्रेषु क्विप्' इति हन्तेः ब्रह्मादिषूपपदेषु भूते क्विप् 'क्विप्च' इति सामान्येन क्विपि सिद्धे नियमार्थं सूत्रम् । चतुर्विधश्चात्र नियमः, धातूपपदप्रत्ययकालविषयः, तेन हिमहेत्यादौ सार्वकालिकः क्विप् भवति । 'सौ च' इति दीर्घः । ब्रह्महणावित्यादिषु 'इन्हन्पूषार्यम्णां शौ' इति शावेव प्रत्यय उपधालक्षणमात्रो दीर्घो नान्यत्रेति नियमान्न सर्वनामस्थानदीर्घो, नापि क्विपमाश्रित्य 'अनुनासिकस्य क्विझलोः' इति । ननु सर्वनामस्थानदीर्घनिषेधसामर्थ्यादेव क्विबाश्रयोऽपि दीर्घो न भविष्यति । सत्यं, इह वृत्रहणीति सप्तम्येकवचने वृत्रहणी ब्राह्मणकुले, इति नपुंसकद्विवचनयोश्च 'अल्लोपोऽनः' इत्यन्नन्तस्य भस्य विधीयमानेऽल्लोपे 'विभाषा ङिश्योः' इति विकल्पिते क्विपमाश्रित्य अनुनासिकस्य क्वाविति दीर्घस्स्यात् । अयं दीर्घनियमः उप-

धालक्षणस्यैव नान्यस्येति वृत्रहेवाचरति वृत्रहायत इत्यत्र 'अकृत्सार्वधातुकयोः' इति दीर्घो भवति ॥

वृत्रहणावित्यादौ 'एकाजुत्तरपदे णः' इति णत्वम्। एकाच् उत्तरपदं यस्य तत्र समासे उत्तरपदप्रातिपदिकान्तनुम्विभक्तिषु नकारस्य पूर्वपदस्थान्निमित्तात्परस्य नित्यं ण इति सूत्रार्थः। भसंज्ञायामल्लोप उत्तरपदमनच्कम्, स्थानिवद्भावश्चाल्विधित्वान्नेत्येकाजुत्तरपदत्वाभावात् 'प्रातिपदिकान्तनुम्विभक्तिषु च' इति-विकल्पो भवति वृत्रघ्नो वृत्रघ्ण इति। अत्र। अधिकृतस्य पूर्वपदस्य सम्बन्धिशब्दत्वात्तेनाक्षिप्तेनोत्तरपदेन प्रातिपदिकस्य विशेषणात् उत्तरपदप्रातिपादिकान्ते नुमि विभक्तौ च स्थितस्य नकारस्य पूर्वपदस्थान्निमित्तादुत्तरस्य वा ण इति सूत्रार्थः। तेन गर्गाणां भगिनी गर्गभगिनीत्यत्र यदुत्तरपदं भगिनीशब्दो न तत्प्रातिपदिकं नापि नान्तं, यन्नान्तं भगिनिति प्रातिपदिकं न तदुत्तरपदमिति णत्वं न भवति। गर्गभगिणीशब्दस्तु गर्गाणां भगो गर्गभगः सोऽस्यास्तीतीनिप्रत्यये 'रषाभ्याम्' इति णत्वे। नन्वस्य 'पूर्वपदात्संज्ञायामगः' इति पूर्वपदस्थान्निमित्तादुत्तरे यदि भवति संज्ञायामेवेति नियमात्कुतः प्रसङ्गः? नैष दोषः, यतोऽत्र पूर्वपदग्रहणेन सम्बन्धिन उत्तरपदस्याक्षेपात् तत्स्थस्यैवायं नियमः। अत्र च नकारो नोत्तरपदस्थः, किन्तु समासप्रातिपदिकाद्विहितेनिप्रत्ययस्थः। एवं च मातृभोगीणः इत्यादौ भोगोत्तरपदलक्षणे खे नित्यं णत्वं भवति। माषानभीक्ष्णं वपति माषवापिनी माषवापिणीत्यत्र 'बहुळमाभीक्ष्ण्ये' इति

सुप्युपपदे आभीक्ष्ण्ये गम्यमाने णिनौ 'गतिकारकोपपदानां कृद्भिस्सह समासवचनं प्राक्सुबुत्पत्तेः' इति कृदन्तावस्थायामेव समासे पश्चात् ङीबिति णिनेर्नकार उत्तरपदप्रातिपदिकान्तस्थ इति णत्वविकल्पः ॥

अभ्याघाती—सम्पृचादिना घिनुण् ॥

घातुकः—'लषपत' इत्यादिना उकञ् ॥

विघ्नः—'घञर्थे कविधानम्' इति कः ॥

वधः—'हनश्च वधः' इत्यनुपसृष्टाद्धनो भावेऽप्प्रत्ययः तत्सन्नियोगेन वधादेशश्च । 'हनश्च' इति चकारो भिन्नक्रमोनुवृत्तस्यापोनन्तर इति घञपि भवति घात इति । भावादन्यत्र उपसृष्टाद्भावे च घञेव, हन्यत इति घातः आहन्यते आहननमिति वा आघात इति । ननु वधिः प्रकृत्यन्तरमस्ति, तस्माद्घञि 'जनिवध्योश्च' इति चिणि ञ्णिति कृति यदुक्तं तन्नेति वृद्धिनिषेधात् वध इति भविष्यति हन्तेश्च घात इति किम् 'हनश्च वधः' इत्यनेन । उक्तं च—'जनिवध्योः' इत्यत्र वृत्तौ, 'वधिः प्रकृत्यन्तरं व्यञ्जनान्तोप्यस्ति, तस्यायं प्रतिषेधो विधीयते' इति । तथा च हरदत्तोपि 'वध हिंसायामिति भूवादौ पाठात्' इति । सत्यमेवं वध इतिरूपं सिद्ध्यति, स्वरस्तु भिद्यते । अयं ह्यादेशोकारान्तोदात्तः तत्रापमाश्रित्य अतो लोप उदात्तनिवृत्तिस्वरेण अप उदात्तत्वादन्तोदात्तो वधशब्दो घञि त्वाद्युदात्तः । एवं च कर्मण्युपसर्गे च हनो वधादेशाभावस्य प्रयोजनमन्तोदात्तवधशब्दनिवृत्तिर्भवति, प्रकृत्यन्तरेणाद्युदात्तो भवत्येव ॥

अभ्रघनः—अभ्रस्य काठिन्यमित्यर्थः 'मूर्तौ घनः' इति हनो घनादेशः, मूर्तिरिह काठिन्यम्। घनं दधीत्यादौ धर्मशब्देन धर्मी भण्यते। अन्तर्घनो बाहीकेषु देशविशेषः 'अन्तर्घनो देशे' इत्यन्तःपूर्वस्य हनोपि घनादेशो निपात्यते। केचिदन्तर्घण इति णकारं पठन्ति, तदपि ग्राह्यमेवेति वृत्तिव्याख्यानेषु। देशादन्यत्रान्तर्घातः ॥

प्रघणः, प्रघाणः—'अगारैकदेशे प्रघणः प्रघाणश्च' इति प्रपूर्वस्य हनो घनादेशो वा वृद्धिश्च निपात्यते, अत्रागारैकदेशशब्दो निपातनस्य रूढ्यर्थत्वात् बाह्ये द्वारप्रकोष्ठके वर्तते। प्रघाण इत्यत्र णत्वमपि निपातनात् 'हन्तेरत्पूर्वस्य' इति तु तपरकरणान्न प्राप्नोति। अगारैकदेशादन्यत्र प्रघातः ॥

उद्घनः—'उद्घनोत्याधानम्' इत्यपि निपात्यते। उदुपरि यस्य निधाय अन्यत्काष्ठं तक्ष्यते तदिहात्याधानम्। अपघनः पाणिः पादश्च 'अपघनोङ्गम्' इत्यपपूर्वस्य हनोपि घनादेशो निपात्यते। अयो हन्यते येन सः अयोघनः। विहन्यते येन स विघनः। समीकरणसाधनम्। द्रुः हन्यते येन स द्रुघनः—'करणेऽयोविद्रुषु' इति अयोविद्रुषूपपदेषु हनोपि घनादेशः। अत्र वृत्तौ "द्रुघण इति केचिदुदाहरन्ति। कथं णत्वम्? अरीहणादिषु पाठात्, 'पूर्वपदात्संज्ञायामगः' इति वा" इति। अन्यत्र अयोघात इत्यादि ॥

स्तम्बघ्नः, स्तम्बघनः दात्रादिः—'स्तम्बे कच' इति स्त-

म्बशब्द उपपदे करणे हनः कप्रत्ययः, चकारादप्, तत्सन्नियोगेन घनादेशश्च । अत्र स्त्रियां विप्रतिषेधेन क्तिन् प्राप्नोति तं बाधित्वा 'करणाधिकरणयोश्च' इति ल्युड्भवति । अत्र भाष्यम्* "अथ यया इषीकया स्तम्बो हन्यते कथं तत्र भवितव्यम्? केचिदाहुः—स्तम्बघ्नेति भवितव्यम्। अपर आहुः—स्तम्बहेतिरिति, 'ऊतियूतिजूतिसातिहेतिकीर्तयश्च' इति निपातनादिति। अपर आहुस्स्तम्बहननीति भवितव्यं वक्ष्यत्येतत्—'अजब्भ्यां स्त्रीखलनाः स्त्रियाः खलनौ विप्रतिषेधेन" इति। अत्र कैय्यटे—'स्तम्बघ्नेति। कप्रत्यये रूपम्, तस्य सर्वापवादत्वादिति भावः। स्तम्बहेतिरिति। निपातनस्य सर्वापवादत्वादिति भावः' इति। अत्र हरदत्तः—"कापोः प्रतिपदविधानस्य सर्वापवादत्वात् 'कृत्यल्युटो बहुळम्' इति बाहुळकाद्वा स्त्रियां स्तम्बघ्ना स्तम्बहनेति भवतः" इति॥

परिघः—'परौ घः' इति परावुपपदे करणे हनोऽप्प्रत्ययः, घश्चादेशः। 'परेश्च घाङ्कयोः' इति परेर्वा लत्वे पलिघः। प्रतिघ इति बाहुलकादित्यात्रेयः॥

उपघ्नः प्रत्यासन्नः-'उपघ्न आश्रये' इति उपपूर्वाद्धनोऽप्युपधालोपो निपात्यते। इहाश्रयशब्दः प्रत्यासन्नवचनः। सङ्घः प्राणिसमुदायः उद्घः प्रशस्तः—'सङ्घोद्घौ गणप्रशंसयोः' इति समुद्भ्यां हनोपि

*३—३—८३

टिलोपो घत्वं च गणे अभिधेये, प्रशंसायां च गम्यमानायाम् । हनो गत्यर्थत्वात् 'गत्यर्था बुद्ध्यर्थाः' इत्युत्कटं हन्यते ज्ञायत इति व्युत्पत्त्या प्रशंसावगतिः । इह गणशब्देन प्राणिनां गण उच्यते, सङ्घशब्दस्य तत्रैव प्रसिद्धत्वात् । तेनान्यत्र समूहे सङ्घात इति भवति । ब्राह्मणसङ्घात इत्यादौ प्राणिविषयत्वं पदान्तरकृतं न तु स्वाभाविकमित्यदोषः । आत्रेयस्तु—'हन्त्यर्थाश्च' इति चुरादिपाठाण्णावेव सङ्घातशब्दमाह ॥

सङ्घस्य पूरणस्सङ्घतिथः—'तस्य पूरणे' इति डटि 'बहुपूगगणसङ्घस्य तिथुक्' इति तिथुगागमः ॥

निघः समारोहपरिणाहः, आरोहः उच्छ्रायः, परिणाहो विस्तारः—'निघो निमितम्' इत्यपि निपात्यते । निमितं समन्तान्मितं* आरोहपरिणाहाभ्यां तुल्यत्वेन ज्ञातमिति व्युत्पत्तिः । पूर्ववद्धनो ज्ञानार्थत्वम् ॥

हेतिः—'ऊतियूति' इत्यादिना क्तिनि नलोप एत्वं च निपात्यते । हिनोतेर्वा गुणे एतन्निपातनम् । केचिदनुशतिकादिषु अस्यहेतिरिति पठन्ति । ततः 'प्रयोजनम्' इति ठकि आस्यहैतिकं इति भवति । अत्रैव पाठाद्वाक्यादपि प्रत्ययः ॥

---

*ख—...न्मितं सम्मितं.

समूलघातं हन्ति—'समूलाकृतजीवेषु हन्कृञ्ग्रहः' इति समूलादिषु कर्मसूपपदेषु यथासङ्ख्यं हनादिभ्यो णमुल्, कषादित्वाद्यथाविध्यनुप्रयोगः । पाणिघातं वेदिं हन्ति पाणिना हन्तीत्यर्थः 'करणे हनः' इति णमुल्, पूर्ववदनुप्रयोगः । अहिंसार्थोऽयमारम्भः । हिंसायां तु प्राण्युपघातः* । अत्रापि 'हिंसार्थानाम्' इति णमुलं बाधित्वा पूर्वविप्रतिषेधादनेनैव णमुलिष्यते । अन्यथा असिघातं हन्तीत्यादौ 'तृतीयाप्रभृतीनि' इति समासविकल्पस्स्यात् । कथं तर्हि 'हिंसार्थानाम्' इत्यत्र वृत्तौ 'दण्डोपघातं गाः कालयति दण्डोपघातमिति च' इत्युदाहृतम् ? उच्यते । 'हिंसार्थानां च' इति चकारेण पुनर्विधानार्थेन पूर्वविप्रतिषेधेन प्राप्तस्य 'करणे हनः' इति णमुलो बाधात् । एवं च पूर्वविप्रतिषेधवचनं तस्यैवानुप्रयोगे नित्यसमासार्थं भवति ॥

गौर्यस्मै दातुं हन्यते स गोघ्नोऽतिथिः—'दाशगोघ्नौ सम्प्रदाने' इत्यच्युपधालोपो निपात्यते । केचिट्टकि निपातयन्ति । तन्मते स्त्रियां गोघ्नीत्यात्रेयः ॥

जङ्घा—यङ्लुगन्तात्पचाद्यचि 'नासिकोदरौष्ठजङ्घा' इति निपातनाट्टिलोप इत्यात्रेयः । 'कण्ठपृष्ठग्रीवा' इत्यत्र न्यासे तु—यङ्लुगन्तादेवाचि टिलोपमुक्त्वा 'हन्तेर्जङ्घ च' इत्याचि जङ्घादेशो व्युत्पादितः । 'जङ्घाभ्यां स्वाहा' इत्यादावाद्युदा-

*अत्र क. ख. कोशयोरित्थमेव पाठो दृश्यते. युक्तं तु 'हिंसा प्राण्युपघातः' इति । दृश्यते च तथैव काशिकायाम्.

त्तत्वं व्यत्ययेन । अत एवानुदात्तत्वदर्शनात् घञि निपातनमस्त्विति न वाच्यम्; 'कण्ठपृष्ठग्रीवाजङ्घं च' इति बहुव्रीहौ संज्ञायां जङ्घाशब्दस्योत्तरपदानुदात्तत्ववचनात् । घञि ह्युत्तरपदस्वरमेव ब्रूयात् ॥

विस्तीर्णजङ्घ, विस्तीर्णजङ्घी—'नासिकोदर' इत्यादिना वा ङीष् ॥

वधमर्हति वध्यः—'दण्डादिभ्यः' इति यत् । अत्र केचित्—'यः' इत्यतकारं पठन्ति । तत् 'अचो यत्' इत्यत्र 'हनो वा वध च तद्धितो वा' इति वार्तिकविरोधादुपेक्ष्यम् । तदिदानीं किमर्थम्? 'कर्तृकरणे कृता बहुलम्' इति समासे असिवध्य इति यथा स्यात् इति । दण्डादियता तु न सिद्ध्यति, तत्र केवलस्य वधशब्दस्य पाठात्, तदन्तविध्यभावाच्च । अयं तर्हि किमर्थः? न वध्यः अवध्य इत्यत्र 'ययतोश्चातदर्थे' इति नञः परस्यातदर्थयत्तद्धितान्तस्योत्तरपदस्य विधीयमानमानुदात्तत्वं यथा स्यादिति । कृदन्तेन तु समासे 'तत्पुरुषे तुल्य' इति पूर्वपदानुदात्तत्वं स्यात् ॥

पुत्रहतः—'वा हतजग्धपरेषु' इति पुत्रतकारस्य वा द्वित्वम् ॥

कुमारिहता—'कुत्सितानि कुत्सनैः' इति कर्मधारये 'घरूप' इत्यादिना ह्रस्वः । कुमार्या हतेत्यत्र तु सामाना-

धिकरण्याभावान्न ह्रस्वः, तेन कुमारीहतेति भवति । स्त्रीहता स्त्रिहता, ब्रह्मबन्धुहता ब्रह्मबन्धूहता—'ङ्याऽश्शेषस्य' इति वा ह्रस्वः । लक्ष्मीहतेत्यत्र तु कृन्ङ्याः प्रतिषेधात् न ह्रस्वः । विदुषिहता विदुषीहता, श्रेयसिहता श्रेयसीहता—'उगितश्च' इति वा ह्रस्वः । विद्वच्छ्रेयसोः पुंवद्भावश्च वृत्तावुक्तः—विद्वद्धता श्रेयोहतेति । आत्रेये तु—महच्छब्दस्य पुंवद्भाव उच्यते महद्धतेति ॥

पादाभ्यां हन्यत इति पद्धतिः—'हिमकाषिहतिषु च' इति पादस्य पद्भावः । पद्धतीति बह्वादित्वात् ङीष् ॥

वार्त्रघ्नः—'तस्येदम्' इत्यादिनाणि 'षपूर्वहन्धृतराज्ञामणि' इत्यल्लोपः । धातोस्स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात् 'हनस्तः' इति तत्वं न भवति ॥

भ्रौणहत्यम्—'दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवाशिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि' इति नकारस्य तत्वं ष्यञि निपात्यते ॥

हथो विषण्णः—'हनि कुषि' इत्यादिना क्थनि 'अनुदात्तोपदेश' इत्यादिनानुनासिकलोपः ॥

हिमम्—'हन्तेर्हि च' इति मकि हिभावः ॥

हिमं न सहते हिमेलुः—'हिमाच्चेलुर्वक्तव्यः' इति तन्न सहत इति विषये चेलुः ॥

महद्धिमं हिमानी—'इन्द्रवरुण' इत्यादिना ङीषानुकौ । तत्र 'हिमारण्ययोर्महत्त्वे' इति पठ्यते ॥

हेमन्तः—' हन्तेर्मुट्च '* इति झच्प्रत्यये मुडागमः। धातोर्हिंभावे गुणः, झस्य चान्तादेशः ॥

हेमन्ते भवं हैमन्तिकम्—' हेमन्ताच्च ' इति शैषिकष्ठञ्। यद्यप्यत्र सूत्रे छन्दोग्रहणमनुवर्तितं वृत्तौ; तथाप्युत्तरसूत्रे सर्वत्र ग्रहणादयं भाषाविषयोपीति वृत्तावेवोक्तम् ॥

हैमनम्—' सर्वत्राण्च तलोपश्च ' इत्यणि तलोपः। अत्र चकारेण ऋत्वणोभ्यनुज्ञानाद्धैमन्तमित्यपि भवति। तलोपोत्र न भवति, ' सर्वत्राण् ' इति विधीयमानाण्सन्नियोगशिष्टत्वात्तस्य ॥

हनुः—' शृस्पृस्निहि ' इत्यादिना उप्रत्ययः ॥

परिहनु भवं पारिहनव्यम्—' अव्ययीभावाच्च ' इति भवार्थे ञ्यः। तत्र ' परिमुखादिभ्य उपसङ्ख्यानम् ' इति परिमुखादिरेवाव्ययीभावः परिगण्यते ॥

हनुलः—' सिध्मादिभ्यश्च ' इति मत्वर्थे लच् ॥

हनूमान्—' शरादीनां च ' इति संज्ञायां मतौ दीर्घः। अत्रैव पाठान्मतुपः ' संज्ञायाम् ' इति वत्वं यवादेराकृतिगणत्वान्न भवति ॥

हंसः—' वृतृवदि ' इत्यादिना सः ॥

आगत्य हन्तीत्याहिः—' आङि श्रिहनिभ्यां ह्रस्वश्च ' इति इण् डित्। डित्त्वाट्टिलोपः, आङो ह्रस्वः ॥

---

*' हन्तेर्मुट् हि च ' इति उणादौ ३–१२९.

अहौ भवमाहेयम् –' दृतिकुक्षि ' इत्यादिना ढञ् ॥

अहीवती – शरादित्वाद्दीर्घः । ' संज्ञायाम् ' इति वत्वम् ॥

उपहत्नुः – ' क्रुहनिभ्यां क्त्नुः ' इति क्त्नुः, कित्त्वादनुनासिकलोपः ॥

अनेहाः अनेहसौ – ' नञि हन एह च ' इति नञि उपपदेऽसुन् एहादेशश्च हनः । ' नलोपो नञः ' इत्युत्तरपदे नञो नलोपे ' तस्मान्नुडचि ' इति लुप्तनकारान्नञः परस्य अजादेरुत्तरपदस्य नुडागमः । ' ऋदुशन ' इत्यनङादेशः सौ असम्बुद्धौ ' सर्वनामस्थाने च ' इति दीर्घः । सम्बुद्धौ तु हे अनेहः ॥

जघनम् –' हन्तेर्द्वित्वं च[1] ' इति द्वित्वम् । ' अभ्यासाच्च ' इति कुत्वम् ॥

जघने* भवं तस्मै हितं वा जघन्यम् – ' दिगादिभ्यो यत् ' ' शरीरावयवाच्च ' इति योगाभ्यां यत् । शरीरावयवत्वादेव यति सिद्धे, इह पाठोऽशरीरावयवार्थः ॥

प्लीहा – ' श्वन्नुक्षन् ' इत्यादिना कनिनन्तो निपातितः । ' उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ' इति व्युत्पत्तिकार्याभावात् ' इन्हन्पूषा ' इति नियमाभावात्सर्वत्र सर्वनामस्थाने दीर्घो भवति, प्लीहा प्लीहानौ इत्यादि । अदिहनी अनुदात्तावुदात्तेतौ ॥

---

[1] ' हन्तेश्शरीरावयवे द्वे च ' इत्येव सूत्रं उणादौ दृश्यते.

*ख–' हन्तेर्द्वित्वं च ' इत्यलचोरन्यतरास्मि........जघने.

# द्विष अप्रीतौ ॥ ३ ॥

लिह्यन्ता अनुदात्तास्स्वरितेतः । द्वेष्टि द्विष्टः द्विषन्ति द्वेक्षि द्विष्ठः द्वेष्मि द्विष्वः । द्विष्टे द्विषाते द्विषते द्विक्षे द्विड्ढ्वे द्विषे द्विष्वहे – ष्टुत्वं तवर्गादौ । सकारादौ ष्टुत्वस्य पूर्वत्रासिद्धत्वात् 'षढोः कस्सि' इति कत्वे षत्वम् ॥

दिद्वेष दिद्विषतुः दिद्वेषिथ दिद्विष दिद्वेष दिद्विषिव । दिद्विषे दिद्विषिषे दिद्विषिवहे – क्रादिनियमादिट् ॥

द्वेष्टा द्वेष्टासि द्वेष्टासे ॥

द्वेक्ष्यति द्वेक्ष्यते ॥

द्वेष्टु द्विष्टात् द्विष्टां द्विषन्तु द्विड्ढि द्वेषाणि द्वेषाव । द्विष्टां द्विक्ष्व द्विड्ढ्वं द्वेषै – 'द्विषश्च' इति लङि विधीयमानो जुस्भावो 'लोटो लङ्वत्' इत्यतिदेशान्न भवति । 'लङश्शाकटायनस्यैव' इत्यत्र लङ्ग्रहणं मुख्यलङ्ग्रहणार्थमिति स्थितत्वात् । हौ धित्वे ष्टुत्वे च षकारस्य जश्त्वेन डकारः । उत्तम आटि पित्त्वादङित्त्वाद्गुणः ॥

अद्वेट् अद्विष्टां अद्विषुः अद्विषन् अद्वेट् अद्विषं अद्विष्व । अद्विष्ट अद्विषातां अद्विषत अद्विषि — तिप्सिपोर्हल्ङ्यादिलोपे गुणे जश्त्वे वा चर्त्वम् । 'द्विषश्च' इति झेर्वा जुस् ॥

द्विष्यात् द्विष्यातां द्विष्याः द्विष्याम् । द्विषीत द्विषीथाः द्विषीय द्विषीवहि —— अपित्सार्वधातुकत्वान्न गुणः । आशिषि स लोपाभावो विशेषः द्विक्षीष्ट —— गुणाभावो 'लिङ्सिचौ' इति कित्त्वात् ॥

अद्विक्षत् अद्विक्षतां अद्विक्षन् अद्विक्षुः अद्विक्षं अद्विक्षाव । अद्विक्षत अद्विक्षातां अद्विक्षन्त अद्विक्षथाः अद्विक्षि अद्विक्षावहि —— 'शल इगुपधात्' इति क्सः, अचि 'क्सस्याचि' इत्यल्लोपः ॥

दिद्विक्षति । दिद्विक्षते —— 'हलन्ताच्च' इति सनः कित्त्वान्न गुणः ॥

देद्विष्यते । देद्विषति देद्वेष्टि — ईटि 'नाभ्यस्तस्याचि' इति गुणाभावः । लङि 'सिजभ्यस्त' इति नित्याज्जुस्भावात्परत्वात् प्रकृतिग्रहणन्यायेन 'द्विषश्च' इत्यनेन विकल्पे अदेद्विषुः अदेद्विषन् इत्युभयं भवति । यङ्लुगन्तस्य सेट्त्वाल्लुङि क्साभावात् अदेद्विषीदिनि सिजेव । तथा क्त्वासनोरपि सेट्त्वे 'रलो व्युपधात्' इति कित्त्वविकल्पेन देद्वेषिषति देद्विषिषति देद्वेषित्वा देद्विषित्वा इति भवति ॥

द्वेषयति अदिद्विषत् ॥

कर्मणि द्विष्यते इत्यादि ॥

विप्रद्विट् प्रद्विट् — 'सत्सूद्विष' इति सोपपदात्सोपस-

र्गाच्च क्विप् । द्विट्शब्दस्तु 'अन्येभ्योपि दृश्यते' इति ताच्छीलिके* क्विपि ॥

द्वेषी – सम्पृचादिना घि नुण् ॥

शत्रुं द्विषन् शत्रोर्द्विषन् – 'द्विषोमित्रे' इति शता। अयमलादेशः । 'द्विषश्शतुर्वा वचनम्' इति कर्मणि षष्ठीविकल्पः ॥

द्वेषणः इति बाहुळकात्कर्तरि ल्युडित्यात्रेयः ॥

द्विष्ट्वा । द्विष्टः । द्विष्टवान् ॥

## दुह प्रपूरणे ॥ ४ ॥

दोग्धि दुग्धः दुहन्ति धोक्षि दुग्धः दुग्ध दोह्मि दुह्वः । दुग्धे दुहाते दुहते धुक्षे धुग्ध्वे दुहे दुह्वहे । झलि पदान्ते च 'दादेः' इति हकारस्य घकारः, 'झषस्तथोः' इति तकारथकारयोः धकारः, 'झलां जश्झशि' इति घकारस्य गकारः । सकारादौ ध्वे पदान्ते च 'एकाचो बशः' इति भष्भावेन दकारस्य धकारः । तत्र सकारादौ 'इण्कोः' इति षत्वम् 'खरि च' इति चर्त्वम् । दुहन्ति दुहते इत्यत्र पूर्वत्रासिद्धत्वादन्तरङ्गत्वाद्वा प्रागेवान्तादादेशयोर्झल्परत्वाभावात् न घत्वप्रसङ्गः ॥

---

* 'ताच्छीलिके' इति खकोशे नास्ति.

दुदोह दुदुहतुः दुदोहिथ दुदुहथुः दुदुह दुदोह दुदुहिव । दुदुहे दुदुहिषे दुदुहिध्वे दुदुहिढ्वे दुदुहिवहे । क्रादिनियमादिट् । ध्वमि 'विभाषेटः' इति मूर्धन्यविकल्पः ॥

दोग्धा दोग्धासे । धोक्ष्यति । धोक्ष्यते ॥

दोग्धु दुग्धात् दुग्धां दुग्धि दोहानि दोहाव । दुग्धां दुहातां धुक्ष्व धुग्ध्वं दोहै — हेरपित्त्वान्न गुणः । आटि तु पित्त्वाद्गुणः ॥

अधोक् अधोग् अदुग्धां अदुहन् अधोक् अदुग्धं अदुग्ध अदोहं अदुह्व । अदुग्ध अदुहातां अदुग्धाः अधुग्ध्वम् अदुहि अदुह्वहि — तिप्सिपोर्हल्ङ्यादिलोपे । पदान्तत्वात् 'दादेः' इति हकारस्य घकारः । 'एकाचो बशः' इति दकारस्य धकारादेशे जस्त्वचर्त्वे । प्रत्ययलक्षणेन लघूपधगुणः ॥

दुह्यात् दुह्यातां दुह्युः दुह्याः । दुहीत दुहीथाः दुहीय — अपित्सार्वधातुकत्वात् न गुणः । आशिषि सलोपाभावो विशेषः, दुह्यात् दुह्यास्तां धुक्षीष्टेत्यादि । तङि 'लिङ्सिचौ' इति कित्त्वान्न गुणः, घत्वभष्भावौ । धुक्षीध्वमित्यत्र 'इणष्षीध्वम्' इत्यनेन मूर्धन्यो न भवति, घत्वे षित्वस्य पूर्वत्रासिद्धत्वात् षीध्वमोभावात् । कृते तु घत्वादौ षीध्वमिणः परं न भवति ॥

अधुक्षत् अधुक्षतां अधुक्षन् अधुक्षः अधुक्षं अधुक्षाव । अधुक्षत अधुक्षातां अधुक्षन्त अधुक्षथाः अधुक्षि

अधुक्षावहि — 'शल इगुपधात्' इति क्सः, 'क्सस्याचि' इत्यलोपः ॥

अत्र केचित्; — क्सस्य भाविनीमनकारान्ततामाश्रित्य झस्याद्भावे 'क्सस्याचि' इत्यल्लोपे अधुक्षत इतीच्छन्ति। तदसत्, तत्र अचीत्यस्य परसप्तमीत्वात्। तत्र दन्त्यादौ तङि 'लुग्वा दुहदिह' इत्यादिना क्सस्य वा लुकि अदुग्ध अदुग्धाः अदुग्ध्वं अदुह्वहीति भवति। अत्रात्मनेपदे ताविति वक्तव्ये दन्त्यग्रहणात् दन्त्योष्ठ्योपि वकारो दन्त्यग्रहणेन गृह्यते ॥

दुधुक्षति दुधुक्षते दोदुह्यते दोदुहीति दोदोग्धि इत्यादि द्विषिवत् ॥

दोहयति। अदूदुहत् ॥

अयं द्विकर्मकः। गां दोग्धि पय इति। तत्र पुरुषप्रयत्नस्य पयोर्थत्वात् पयः प्रधानं कर्म अन्यदप्रधानम्। तत्र 'अप्रधाने दुहादीनाम्' इति वचनात्कर्मणि लादयोऽप्रधाने भवन्ति, दुह्यते गौः पयो देवदत्तेन अदोहि गौः दोग्धव्या सुदोहा दुग्धेति। कृद्योगलक्षणा षष्ठी द्वितीयावदुभयोरपि कर्मणोर्भवति दोग्धा गोः पयस इति। 'उभयथापि गोणिकापुत्रः' इति भाष्ये उक्तत्वादप्रधाने द्वितीयापि भवति, दोग्धा गां पयस इति। दोग्धव्या गौः पयो देवदत्तेनेत्यत्र अनभिहिते कर्मणि कर्तरि च 'कर्तृकर्मणोः' इति षष्ठी न भवति, उभयप्राप्तौ कृत्ये षष्ठ्या निषेधस्योक्तत्वात्। अप्रधाने द्वितीयापि भवति उपपादितं चैतन्नाथतौ ॥

कर्मकर्तरि 'न दुहस्नुनमाम्' इति निषेधाद्यगस्य न भवति दुग्धे गौः पयस्स्वयमेव पयो मुञ्चतीत्यर्थः । चिण्तु 'दुहश्च' इति विकल्पनात्पक्षे भवति अदोहीति । अन्यदा कर्तृवत् क्से तस्य च वा लुकि अधुक्षत अदुग्ध इत्यपि भवति । एवं च 'न दुह' इति चिण्णिषेधो दुहिव्यतिरिक्तार्थो भवति । अस्ति हि दुहस्सकर्मकस्यापि कर्मवद्भावः 'दुहिपच्योर्बहुळं सकर्मकयोः' इति । 'न दुह' इति निषेधो 'दुहश्च' इति णिज्विकल्पश्च प्रकृतिग्रहणन्यायेन यङ्लुगन्तेपि भवति । दोदुग्धे गौः पयः अदोदोहि अदोदोहिष्टेति । यङ्लुगन्तस्य सेट्त्वान्न क्सोस्तीति सिचेव ॥

दुह्यं दोह्यं — 'शंसिदुहिगुहिभ्यो वेति वक्तव्यम्' इति क्यब्ण्यतौ ॥

गोधुक् प्रधुक् — 'सत्सूद्विष' इत्यादिना सोपपदादुपसृष्टाच्च क्विप् ॥

कामदुघा — 'दुहः कब्घश्च' इति कप्प्रत्ययो हस्य च घः ॥

दोही — सम्पृचादिना घिनुणन् ॥

दुहिता — 'नप्तृनेष्टृ' इत्यादिना तृचि इट् गुणाभावश्च निपात्यते, 'ऋन्नेभ्यः' इति ङीप् स्वस्रादिपाठान्न भवति दुहितरावित्यादौ सर्वनामस्थाने 'अप्तृन्' इति दीर्घो न

भवति, तत्र 'नप्त्रादीनां ग्रहणं संज्ञाशब्दानामौणादिकानामेषामेव दीर्घ इति नियमार्थम्' इत्युक्तत्वात्। सौ तु 'ऋदुशनस्' इत्यादिनानङि 'सर्वनामस्थाने च' इति दीर्घः ॥

दुहितुरपत्यं दौहित्रः — बिदादित्वादञ्। स्त्रियां दौहित्री 'शार्ङ्गरवाद्यञः' इति ङीन् ॥

सूतपुत्री सूतदुहिता — 'सूतोग्रराजभोजभ्यो दुहितुः पुत्रड्वावक्तव्यः' इति वा पुत्रडादेशः। टित्त्वात् ङीप्। एवमुग्रपुत्रीत्याद्यपि। 'वाचंयम' इत्यत्र वृत्तौ* पुत्रडादेशमुक्त्वा, 'केचित्तु शार्ङ्गरवादिषु पुत्रशब्दं पठन्ति तस्य पुत्रीति भवति अन्यत्रापि दृश्यते शैलपुत्री' इत्युक्तम्। कथं तर्हि 'वा सूतकापुत्रकावृन्दारकाणाम्' इति विकल्प उक्तः? अत्र हरदत्तः — "पुत्रिकेति शार्ङ्गरवादिपाठात् ङीनि स्वार्थे कनि 'केणः' इति ह्रस्वः। अकारस्तस्य पक्षे अयं विधीयते" इति। इरिदयमर्दनार्थश्चापि गतः ॥

## दिह उपचये ॥ ५ ॥

देग्धि दिग्धे इत्यादि पूर्ववत् ॥

प्रणिदेग्धि — 'नेर्गद' इति णत्वम्। अत्र देग्धीति श्तिपा निर्देशात्प्रणिदेदेग्धीत्यत्र णत्वम् न भवति ॥

---

* एतदुत्तरसूत्रे (६–३–७०) वृत्तौ अयं ग्रन्थो दृश्यते.

देहः — 'अकर्तरि च कारके' इति कर्मणि घञ् ॥

देहोस्यास्तीति देही — 'अत इनिठनौ' इति इनिः । यद्यपि — 'एकाक्षरात्कृतो जातेस्सप्तम्यां च न तौ स्मृतौ' इतीनिठनौ कृदन्तान्निषिध्येते, तथापि 'तदस्यास्त्यस्मिन्' इत्यत्र इतिकरणस्य चानुवर्तनात्तस्य च विषयनियमार्थत्वात् कार्यीत्यादिवदत्रेनिर्भविष्यति । उक्तं च वृत्तौ—'इतिकरणो विषयनियमार्थस्सर्वत्र सम्बध्यते' इति ॥

दिह्यते उपलिप्यत इति देहनी — बाहुळकात्कर्मणि ल्युट्, गौरादित्वात् ङीष् ॥

## लिह आस्वादने ॥ ६ ॥

लेढि लीढः लिहन्ति लेक्षि लेह्मि । लीढे लिहाते लिहते लिक्षे लिहाथे लीढ्वे लिहे लिह्वहे । झलि 'होढः' 'झषस्तथोः' इति तथोर्धकारे 'ष्टुना ष्टुः' इति ष्टुत्वे, तस्य चाश्रयात्सिद्धत्वात् ढोढेलोपे 'ढ्रलोपे पूर्वस्य दीर्घः' इति दीर्घः । सकारादौ 'षढोः' इति कत्वम् । तिपि ढत्वस्य पूर्वत्रासिद्धत्वात्पूर्वमेव गुणे ढत्वादि । लिहन्ति लिहते इत्यत्राप्यसिद्धत्वादिना पूर्वमेवान्तादादेशयोः झल्परत्वाभावाड्ढत्वम् न भवति ॥

लिलेह लिलिहतुः लिलेहिथ लिलिहिव । लिलिहे लिलिहिषे लिलिहिढ्वे लिलिहिध्वे लिलिहिवहे—क्रादिनियमादिट् ॥

लेढा । लेक्ष्यति लेक्ष्यते । लेढु लीढात् लीढां लिहन्तु लीढि लेहानि । लीढां लिहातां लिक्ष्व लीढ्वम् लेहै—हौ धित्वे ष्टुत्वादि ॥

अलेट् अलीढां अलिहन् अलेट् अलीढं अलीढ अलेहं अलिह्व । अलीढ अलिहातां अलिहत अलीढाः अलीढ्वं अलिहि अलिह्वहि ॥

लिह्यात् लिह्याः लिह्याम् । लिहीत लिहीथाः लिहीय—अत्र अपित्सार्वधातुकत्वान्न गुणः । आशिषि लिह्यात लिह्यास्तां लिक्षीष्ट इत्यादि—'लिङ्सिचौ' इति कित्त्वान्न गुणः । लिक्षीध्वमित्यत्र ढत्वे षत्वस्यासिद्धत्वान्न षीध्वमस्ति । कृते च ढत्वे कत्वषत्वयोश्च नेणः परष्षीध्वमिति नास्ति मूर्धन्यप्रसङ्गः ॥

अलिक्षत् अलिक्षतां अलिक्षन् अलिक्षः अलिक्षं अलिक्षाव । अलिक्षत अलिक्षातां अलिक्षथाः अलिक्षि । 'लुग्वा दुह' इत्यादिना दुहिवत् क्सस्य वा लुकि अलीढ अलीढाः अलीढ्वं अलिह्वहि इत्यपि भवति ॥

लिलिक्षति लिलिक्षते । लेलिह्यते लेलिहीति लेलेढि । लेलिहान इति चानशि ॥

लेहयति अलीलिहत् ॥

लेहः—'श्याद्व्यध' इति णः इगुपधलक्षणस्य कस्यापवादः ॥

वहंलिहः अभ्रंलिहः — ‘ वहाभ्रे लिहः ’ इति वहाभ्रयोः कर्मणोरुपपदयोः खश् । ‘ अरुर्द्विषदजन्तस्य ’ इति पूर्वपदस्य मुम् । खशश्शित्त्वेनापित्सार्वधातुकत्वेन ङित्त्वान्न गुणः । शपस्तु लुका लुप्तत्वान्न तदपेक्षोपि । अत्र आत्रेयः “ गणकार्यस्यानित्यत्वात् , ‘ सृक्किण्यो लिहति जिह्वया कदाचित् ’ इति संज्ञापूर्वको विधिरनित्यः इति गुणाभावोपि । एवं वैदिके अलिहदित्यादयः ” इति । श्वलिड्ढौकते इत्यत्र हो ढे पदान्तरनिरपेक्षत्वेनान्तरङ्गत्वाज्जस्त्वमिति ढलोपो न भवति ॥

लिक्षा — बाहुलकात् क्सः ॥

यूकालिक्षम् — ‘ क्षुद्रजन्तवः ’ इति नित्यं समाहारद्वन्द्वे नपुंसकत्वम् ॥

द्विषादयोनुदात्तास्स्वरितेतः ॥

---

अथात्मनेपदिनः

## चक्षिङ् व्यक्तायां वाचि ॥ ॥

उदात्तो*नुदात्तेदयं दर्शनकर्मा च । यथा — ‘ विश्वा रूपाभिचष्टे शचीभिः ’ इति । प्रायेण चायमाङ्पूर्वः । आचष्टे — ‘ स्कोः ’ इति कलोपः । आचक्षाते आचक्षते आचक्षे —

*क—अनुदात्तोपदेशो.

कलोपे 'षढोः कस्सि' इति कत्वम्, 'इण्कोः' इति षत्वम्। आचड्ढ्वे—कलोपष्टुत्वयोः जस्त्वं षो ढः॥

चचक्षे चचक्षाते चचक्षिरे चचक्षिषे चचिक्षिध्वे चचक्षे चचक्षिवहे। चख्ये चख्याते चख्यिरे चख्यिषे चख्यिध्वे चख्ये चख्यिवहे—'वा लिटि' इति ख्याञादेशो वा। उभयत्रापि क्रादिनियमादिट्। 'आतो लोप इटि च' इत्याल्लोपोऽजादौ क्ङिति इटि च। ध्वम्याल्लोपे इण्णन्तादङ्गात्पर इति 'विभाषेटः' इति मूर्धन्यविकल्पाभावः परस्तादुपपादयिष्यते। ख्याञो ञित्वात्पक्षे परस्मैपदमपि भवति॥

चख्यौ—'आत औ णलः'। चख्यतुः चख्युः चख्याथ चख्यथ चख्यथुः चख्य चख्यौ चख्यिव—थलि 'अचस्तास्वत्' 'ऋतो भारद्वाजस्य' इतीड्विकल्पः। क्शादिरप्ययमादेश इष्यते इति वृत्तौ, तेन चक्शे चक्शाते चक्शिषे चक्शिध्वे चक्शे चक्शिवहे। चक्शौ चक्शतुः चक्शुः चक्शाथ चक्शिथ चक्शौ चक्शिव इति च भवति। भाष्ये तु—ख्याञ्क्शाञावुक्त्वा उभयोस्सङ्ग्राहकमादेशान्तरमुक्तम्। यथा "क्शादिर्वा अथवा क्शादिर्भविष्यति केनेदानीं क्शादिर्भविष्यति चक्षेण। अथ ख्यादिः कथम्, असिद्धे शस्य यवचनं विभाषा" इति। 'असिद्धे शस्य' इत्यस्य कैय्यटः "पूर्वत्रासिद्धमित्यधिकारे णत्वविधानानन्तरं शस्य यत्वं विभाषा वक्तव्यम्" इति। हरदत्तोऽप्येवम्। सुधाकरस्तु "वाशब्दोपजीवनाय 'यरोऽनुनासिकेऽनुनासिको वा' इत्यस्यानन्तरम्" इति। अस्याश्च कल्पनायाः प्र-

योजनानि सुप्रख्यस्य भावः सौप्रख्यम्, इत्यत्र 'योपधाद्गुरूपोत्तमाद्वुञ्' इति योपधलक्षणे वुञि यत्वस्य पूर्वत्रासिद्धत्वेनायोपधत्वाद्वुञभावात् 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति ष्यञ्। तथा – सुप्रख्येन निर्वृत्तो देशः सौप्रख्यः तत्र भवः सौप्रख्यीयः इत्यत्र 'धन्वयोपधाद्वुञ्' इति यत्वस्यासिद्धत्वात् तदभावे 'वृद्धाच्छः'। पुंसः ख्यानं पुङ्ख्यानमित्यत्र च संयोगान्तत्वेन सलोपे 'सम्पुङ्कानाम् सो वक्तव्यः' इत्यम्परे खयि मकारस्य विधीयमानस्सकारो यत्वस्यासिद्धत्वादम्परत्वाभावान्न भवति। चख्यिध्वे इत्यत्र ध्वमीटचाल्लोपे 'इणःषीध्वम्' 'विभाषेटः' इति मूर्धन्यो यत्वस्यासिद्धत्वान्न भवति। नमः ख्यात्रे इत्यत्रापि यत्वस्य 'शर्परे खरि विसर्जनीयः' इति विसर्जनीये कर्तव्ये असिद्धत्वात् अस्ति शर्परतेति विसर्जनीयः। अन्यथा 'कुप्वोः ᳲकᳲपौ च' इति विसर्जनीयजिह्वामूलीयौ द्वौ स्याताम्। किञ्च, ख्यातमित्यत्र 'संयोगादेरातोधातोर्यण्वतः' इति निष्ठानत्वे कर्तव्ये यत्वस्यासिद्धत्वान्नत्वाभावः। तथा पर्याख्यानमित्यत्र 'कृत्यचः' इति णत्वे यत्वस्यासिद्धत्वात् अनटा शकारेण व्यवधानात् णत्वाभावः। ननु ख्यातमित्यत्र 'न ध्याख्या' इति नत्वप्रतिषेधस्य सिद्धत्वात् कथमिदं भाष्ये प्रयोजनमुक्तम्? अत्र कैयटः "'न ध्याख्या' इति तु प्रतिषेधः 'ख्या प्रकथने' इत्यस्यैव, प्रतिपदोक्तत्वात्। अस्य तु शस्य यत्वेन लाक्षणिकत्वादिति मन्यते" इति। ननु नमः ख्यात्रे इत्यत्र जिह्वामूलीयस्याभावः कथं

प्रयोजनमुक्तम्? यस्मात्स दुर्वारः। तथाहि; ख्या प्रकथन इत्यस्मादपि तृचि ख्यातृशब्दस्य सद्भावात् तत्स्थस्य च यकारस्य अनादेशत्वात् असिद्धत्वाभावात् न शर्परत्वमिति 'शर्परे खरि विसर्जनीयः' इत्यस्याप्रसङ्गात् 'कुप्वोः' इति प्राप्तस्य पाक्षिकस्य जिह्वामूलीयस्य बाधकाभावात्। नैष दोषः। ख्यातिरप्यार्धधातुके ख्शादिः। 'असिद्धे शस्य यवचनं विभाषा' इत्येतदपि तस्यापि साधारणमिति। अत्र च प्रमाणं 'सस्थानत्वं नमः ख्यात्रे' इत्यत्र सस्थानत्वं न भवतीति भाष्यवार्तिकयोः सस्थानाभावस्य प्रयोजनत्वेन कथनम्। सस्थानमिति जिह्वामूलीयस्य संज्ञा। तथा च हरदत्तः "'ख्या प्रकथने' इति वक्ष्यते सोपि ख्शादिः 'असिद्धे शस्य यवचनं विभाषा' इत्यपि तस्यापि साधारणं द्रष्टव्यम्" इति। आत्रेयोपि 'सर्वत्रार्धधातुके चक्षे इति वास्य रूपम्' इति। एवं च* चक्षिङिव ख्यातिरपि निष्ठायां ख्शादिः शकारस्य च 'असिद्धे शस्य यवचनं विभाषा' इति वा यत्वं तच्च 'संयोगादेरातः' इति निष्ठानत्वे असिद्धमिति यत्वस्याभावात् नत्वस्य नैव प्रसङ्ग इति 'न ध्याख्या' इति प्रतिषेधः ख्यात्यर्थोपि न कर्तव्यो भवति। अत्रेदं विचार्यते, चक्शौ† इत्यादौ यत्वाभावे चर्त्वे 'खयो द्वितीयाश्शरि पौष्करसादेः' इति खकारो भवति वा न वेति। तत्राह, अस्मिन्कर्तव्ये चर्त्वस्य पूर्वत्रासिद्धत्वात् द्वितीयभाविनः खयोभा-

* खकोशे 'च' इति नास्ति.  † ख—आचक्शौ.

वात् । ‘ खयो द्वितीयाः ’ इत्येतत् ‘ नादिन्याक्रोशे पुत्रस्य ’ इत्यत्र हि पठ्यते । न चैवं भ्रमितव्यं ‘ क्शादिरप्ययमादेश इष्यते ’ इति वृत्तौ ककारादिरप्ययमादेश उच्यत इति द्वितीयभाविनः खयस्सम्भवात् अस्ति ‘ खयो द्वितीयाः ’ इत्यस्य प्राप्तिरिति ; यतो वृत्तिकारनिर्देशो भाविचर्त्वापेक्षः । अन्यथा ‘ अथवा ख्शादिर्भविष्यति केनेदानीं क्शादिर्भविष्यति , चर्त्वेन ’ इत्यादिभाष्यविरोधप्रसङ्गः ॥

ख्याता ख्यातासे ख्याताहे । क्शाता क्शातासे क्शाताहे । ख्याता ख्यातासि ख्यातास्मि । क्शाता क्शातासि क्शातास्मि —‘ चक्षिङः ख्याञ् ’ इत्यार्धधातुके ख्याञादेशः । लिड्वत्* क्शादित्वमनुसंधेयम् ॥

ख्यास्यते ख्यास्यसे ख्यास्ये । ख्यास्यति इत्यादि । क्शादिपक्ष उदाहार्यम् ॥

चष्टां चक्षातां चक्षतां चक्ष्व चक्षाथां चड्ढ्वं — कलोपादि लड्वत् । चक्षै ॥

अचष्ट अचक्षातां अचक्षत अचष्ठाः अचड्ढ्वं अचक्षि अचक्ष्वहि ॥

चक्षीत चक्षीयातां चक्षीथाः चक्षीयाथां चक्षीध्वं चक्षीय । आशिषि ख्यासीष्ट ख्यासीयास्तां ख्यासीष्ठाः ख्यासीध्वं ख्यासीय । ख्येयात् ख्येयास्तां ख्येयासुः ख्ये-

* ख-लिटि च.

याः ख्येयास्तं ख्येयासम्—‘ एर्लिङि ’ ‘ वान्यस्य संयोगादेः ’ इत्येत्वं वा हलादौ क्ङित्यार्धधातुके लिङि । एत्वाभावे ख्यायात् ख्यायास्तां ख्यायाः ख्यायासम् । क्शासीष्ट । क्शेयात् । क्शायात् इत्यादि चोदाहार्यम् ॥

अख्यत अख्यथाः अख्यध्वं अख्ये अख्यावहि । अख्यत् अख्यतां अख्यन् अख्यं अख्याव—‘ अस्यतिवक्तिख्यातिभ्योऽङ् ’ इति च्लेरङादेशः* । ‘ ख्या इति प्रकथनार्थस्य आदेशस्य च ग्रहणम् ’ इति वृत्तिः । ‘ आतो लोप इटि च ’ इत्यालोपोऽङि । अख्येतां इत्यादौ ‘ आतो ङितः ’ इतीयादेशः । यत्रादौ ‘ अतो दीर्घः ’ । अङ्विधौ ख्यातीति कृतयत्वायाः विकृतेर्निर्देशात् अकृतयत्वायाः प्रकृतेरग्रह इति यदा क्शादित्वं तदा सिज़ेव । अक्शास्त अक्शासातां अक्शासत अक्शास्थाः अक्शासि अक्शास्वहि । अक्शासीत् अक्शासिष्टां अक्शासिषुः अक्शासीः अक्शासिषं—‘ यमरमनमातां ’ इति सगिटौ । ननु “ ‘ निसमुपविभ्यो ह्वः ’ इति कृतात्वस्यानुकरणेन विधीयमानस्तङ् निह्वास्यत इत्यादौ आकारान्त एव स्यात् न तु तत्प्रकृतेरदन्तस्य ह्वे इत्येतस्येति निह्वयत इत्यादिसिद्ध्यर्थं विकृतिरपि प्रकृतिं गृह्णात्येव । कथं ज्ञायते ? यदयं ‘ न व्यो लिटि ’ इत्यात्वभूतस्य वेञो निर्देशेन आत्वस्य प्रतिषेधं शास्ति ततो ज्ञायते ” इत्युक्तं न्यासे, तद्वदिहापि विकृत्या प्रकृतेर्ग्रहणादङ् स्यात् । मैवं ; न तत्र विकृत्या

---

* ख—......शः कर्तरि ।

प्रकृतेर्ग्रहणात्तङ्, किन्तु एजन्तैव प्रकृतिरनुक्रियत इति। अनुकरणस्यात्वं तु लक्षणवशात्। 'न व्यो लिटि' इत्यत्राप्यनुकार्यमेजन्तमेव लक्षणवशादनुकरणमात्वभूतमिति न विकृत्या प्रकृतिग्रहणस्य इदं ज्ञापकम्। सर्वमेतत्प्रपञ्चितं हृद्यतौ* ॥

अख्यास्यत। अख्यास्यत्। अक्शास्यत। अक्शास्यत् ॥

कर्मणि — ख्यायते क्शायत इत्यादि ॥

स्यादिषु वा चिण्वदिटि ख्यायिष्यते अख्यायिष्यत ख्यायिषीष्ट ख्यायिता इत्यादि। इडभावे ख्यास्यते अख्यास्यत ख्यासीष्ट ख्यातेत्यादि। क्शादिरप्युदाहार्यः। एवं कर्मकर्तर्यपि। लुङि तु तशब्दे कर्मणि नित्यश्चिण्। कर्मकर्तरि तु 'अचः कर्मकर्तरि' इति पाक्षिकः। तदभावे द्विवचनादौ च 'अस्यतिवक्तिख्यातिभ्यः' इत्यङ्, अख्यायि अख्यत अख्येतां इत्यादि। क्शादित्वे त्वङ् नास्तीत्युक्तम्। तेन अक्शायि इति चिणि तदभावे सिचि चिण्वदिटो भावाभावाभ्यां अक्शायिष्ट अक्शास्त अक्शायिषातां अक्शासातां इत्यादि। तदेवं क्शादिपक्षे तशब्दे त्रैरूप्यमिति ॥

सनि; चिख्यासति। चिख्यासते। चिक्शासति। चिक्शासते ॥

चाख्यायते। चाक्शायते ॥

---

* क—स्फायतौ.

यङ्लुकि 'नलुमताङ्गस्य'* इत्यत्र लुमतालुप्तप्रत्ययनिमित्ते आङ्गे च अनाङ्गे च कार्ये प्रत्ययलक्षणनिषेधाद्यङ्परत्वाभावान्न ख्याञादेशः । ननु 'आर्धधातुके' इति विषयसप्तमीति प्रागेव तदुत्पत्तेः ख्याञादेशेन भाव्यम्, मैवं लुकात्र विषयत्वमेवापह्रियते । तथाच 'न लुमताङ्गस्य' इत्यत्र कैयटे "नलुमता तस्मिन् इति चेत् हनि णिङादेशा न सिद्ध्यन्ति इति भाष्यवार्तिकयोरुक्तेः 'लुङि च' इत्यादौ विषयसप्तम्याश्रयणेनादेशास्सेत्स्यन्ति" इत्याशङ्क्य "लुका लुङो विषयत्वापहारात् विषयसप्तम्याश्रयणेप्यसिद्धिः" इत्युक्तम् । एवं च अङ्विधौ ख्यातीति श्तिपा निर्देशः प्रकथनार्थस्य यङ्लुक्यङ्निवृत्त्यर्थो भवति । यदुक्तं वर्धमानेन 'ख्यातीति श्तिपा निर्देशाद्यङ्लुक्यचाख्यासीत्' इति, तदपि प्रकथनार्थपरं व्याख्येयम् ॥

ख्यापयति । क्शापयति । अचिख्यपत् । अचिक्शपत् ॥

आख्येयं आक्शेयं—'आर्धधातुके' इत्यस्य विषयसप्तमीत्वात्प्रागेव प्रत्ययोत्पत्तेः ख्याञादेश इत्यजन्तलक्षणो यद्भवति । 'ईद्यति' इतीत्वे गुणः ॥

संचक्ष्यः वर्जनीय इत्यर्थः—'वर्जने प्रतिषेधः' इति ख्याञभावे हलन्तलक्षणो ण्यत् ॥

---

* ख—......मता तस्मिन्.

शोभनं प्रचष्टे सुप्रख्यः — उपसृष्टादकर्मोपपदाच्च 'आतश्चोपसर्गे' इति कः । उपसृष्टात्कर्मोपपदात्तु कर्मण्यणि युकि गोप्रख्यायः इति । गास्संचष्टे गोसङ्ख्यः इत्यत्र तु 'समि ख्यः' इति कर्मणि समि चोपपदे अणोपवादः कः । तथा स्त्रियमाचष्टे स्त्र्याख्यः प्रियाख्य इत्यत्र च 'मूलविभुजादिभ्यः' इति को भवति । तथा अनुपसृष्टात्कर्मोपपदात् 'आतोनुपसर्गे कः' इति के गोख्य इति । अनुपसृष्टादनुपपदात्तु 'श्याद्व्यधा' इत्याकारान्तलक्षणे णे युकि ख्याय इति । गोख्यायो व्रजति, गोसङ्ख्यायो व्रजति इत्यत्र तु 'अण्कर्मणि च' इति कर्मणि क्रियायां क्रियार्थायां चोपपदे भविष्यति विधीयमानोण् परत्वात् 'आतोनुपसर्गे कः' 'समि ख्यः' 'मूलविभुजादिभ्य उपसङ्ख्यानम्' इति विधीयमानं कं बाधते । तथा च वृत्तिः 'कर्मण्यण् सामान्यविहितोपि वासरूपविधेरभावात् ण्वुला बाधितः पुनरण्विधीयते, सोपपदत्वात् ण्वुलं बाधते, परत्वाच्च कादीन् । तेनापवादविषयेपि भवत्येव' इति । वासरूपाभावश्च 'क्तल्युट्तुमुन्खलर्थेषु वासरूपविधेः प्रतिषेधः' इति ॥

ईषदाख्यानम् — 'आतो युच्' इति ईषदादिषु कृच्छ्राकृच्छ्रार्थेषु उपपदेषु युच् ।

आख्या —'आतश्चोपसर्गे' इत्यङ् । सर्वेष्वेषु कृत्सु क्त्वादिरप्युदाहार्यः ॥

अत्रेकारे विप्रतिपद्यन्ते; "अयमनुदात्तः, प्रयोजनं विचक्षण इत्यत्र 'अनुदात्तेतश्च' इति युच्" इति कैयटपदमञ्जरीकारादयः। अत्र 'असनयोश्च प्रतिषेधः' इति ख्याञभावः। 'इदितो नुम्' इति नुमिह न भवति; तत्रान्तग्रहणानुवृत्तेः अन्त इदित एव तद्विधानात्। अयं च 'असनयोश्च' इति ख्याञ्निषेधः संज्ञायाम्। यथा ह भाष्यकारः 'बहुलं तणिति वक्तव्यं अन्नवधकगात्रविचक्षणाजिराद्यर्थम्। किमिदं तणिति? संज्ञाछन्दसोर्ग्रहणम्' इति। तेनासंज्ञायां भावादौ ल्युत्याख्यानमिति भवति। अत्रानुदात्तेत्त्वादेव तङि सिद्धे ङकारोऽन्तोदित्त्वविघातार्थेति के चित्। एवं हि चक्ष इत्यकारमेव अनुदात्तमितमासजेत्। तस्मादन्तोदित्त्वाभावार्थस्सन् 'अनुदात्तेत्त्वप्रयुक्तमात्मनेपदमनित्यम्' इति ज्ञापनार्थोऽयं ङकारः। तेन 'तालैश्शिञ्जद्वलयसुभगैः' 'तृण्णे जृम्भसि' 'प्रार्थयन्ति शयनोत्थितं प्रियाः' इत्यादयः प्रयोगा उपपद्यन्ते। ननु शिङ्क्ते इति शिञ्जः, जृम्भत इति जृम्भः, तद्वदाचरतीति क्वौ शतरि सिपि च शिञ्जन् जृम्भसीति सिद्ध्यतः। तथा प्रार्थनं प्रार्थः 'तत्करोति' इति णौ तिपि प्रार्थयतीति। तत्किं ज्ञापनेन? सत्यं, शब्दास्सिद्ध्यन्ति, अर्थास्सहृदयहृदयंगमा न भवन्ति। अत्रात्रेयः 'ङित्करणमेकानुबन्धकस्यात्मनेपदस्यानित्यत्वज्ञापनार्थम्' इति। नेहाप्यार्जवं पश्यामः; यस्मादवश्यं युजर्थमनुदात्तेत्कत्वं कर्तव्यम्, तेनैव च तङ्सिद्धेः पुनस्तदर्थः क्रियमाणो ङका-

रोनुदात्तेत्त्वप्रयुक्तस्य तङोनित्यत्वज्ञापनायैव भवति । तथा 'गणकृतमात्मनेपदमनित्यमिति ज्ञापनार्थम्' इति तरङ्गिणीग्रन्थोप्यनेनैव प्रत्युक्तः । सम्मताकारस्तु 'इकार उच्चारणार्थः' इति । तन्मते विचक्षण इत्यत्र युच् न स्यात् । ल्युट्येव ख्याञभावोस्तीति न शक्यते वक्तुम्; 'सूर्या उभा चन्द्रमसा विचक्षणा' इत्यन्तोदात्ताध्ययनात् ल्युटि हि मध्योदात्तत्वेन भाव्यम् । न च 'अन्नवधकगात्रविचक्षण' इति निर्देशो युचमपि कल्पयेत्, यस्मादयमार्धधातुके ख्याञभावमात्रपर इति ल्युट्येव ख्याञभावेपि चरितार्थः । 'अन्नवधक' इत्यत्र 'विचक्षण इति ल्युट्येतत्' इति वदन्न्यासकारोपि स्वरविरोधेनैव प्रत्युक्तः ॥

नृचक्षाः राक्षसः—'असुन्' इत्यसुन्प्रत्ययः । 'असनयोश्च' इति ख्याञभावः ॥

चक्षुः—'चक्षेश्शिच्च' इत्युसिप्रत्ययः । तस्य शित्वात्सार्वधातुकत्वात् ख्याञभावः ॥

अचक्षुः चक्षुः करोति चक्षूकरोति—'अरुर्मनः' इत्यादिना च्वौ सलोपे 'च्वौ च' इति दीर्घः ॥

शब्दतन्त्रस्वतन्त्रेण प्रक्रियैवं प्रपञ्चिता ।
तस्या निश्शेषतस्सन्तु बोद्धारो भाष्यपारगाः ॥

---

# ईर गतौ कम्पने च ॥ ९ ॥

इतः पृचिपर्यन्ता उदात्ता अनुदात्तेतः । ईर्ते ईराते ईरते ईर्षे ईरे ॥

ईरांचक्रे—'इजादेश्च गुरुमतोनृच्छः' इत्याम् । अत्र केचित् 'इन्धिभवतिभ्यां च' इतीन्धेः परस्य लिटः कित्त्वविधानात् ज्ञापकात् आमः पाक्षिकत्वं ज्ञापयन्तः 'रथचरणादिभिरीरिरेथ*वीराः' इति प्रयोगं समर्थयन्ते । न च 'समीधे दस्युहन्तमम्' इत्यादौ मन्त्रत्वादामो निषेधे श्रूयमाणस्य लिटः कित्त्वार्थं सूत्रं स्यात् । यस्मादत्र 'छन्दस्युभयथा' इति सार्वधातुकत्वात् 'सार्वधातुकमपित्' इति ङित्त्वेनैव कित्कार्यम् 'अनिदिताम्' इत्युपधालोपस्सिध्यति ; तस्मात् ज्ञापकमेवेति । सत्यमेवं शक्यते कल्पयितुम् ; भाष्यकारवार्तिककारयोस्तु नेष्टम्, यत्सूत्रमेव प्रत्याचख्यतुः, 'इन्धेश्छन्दोविषयत्वाद्भुवो वुको नित्यत्वात्ताभ्यां लिटः किद्वचनानर्थक्यम्' इति ॥

ईरिता ईरितासे ईरिताहे । ईरिष्यते ईरिष्यसे ईरिष्ये ॥

ईर्तां ईर्ष्व ईर्ध्वं ईरै । ऐर्त ऐरातां ऐरत ऐर्थाः ऐरि ऐर्वहि ॥

ईरीत ईरीयातां ईरीथाः ईरीय । आशिषि, ईरिषीष्ट ईरिषीष्ठाः ईरिषीढ्वं ईरिषीध्वम्—'विभाषेटः' ॥

*ख—...रिरेतु.

ऐरिष्ट ऐरिषातां ऐरिष्ठाः ऐरिध्वं ऐरिढ्वम्—'धि च' इति सलोपे 'विभाषेटः'। ऐरिषि ऐरिष्वहि ॥

कर्मणि ईर्यते इत्यादि ॥

ईरिरिषते ॥

ईरयति । मा भवानिरिरत् ॥

समीरणः*—'अनुदात्तेतः' इति युच्। 'ण्यन्तान्नन्द्यादित्वेन ल्युः' इत्यात्रेयः ।

निम्नमीर्ते इति नीरम्—निशब्दोयं वृत्तौ निम्नवचनः । तस्मिन्नुपपदे 'कर्मण्यण्' इत्यण् । 'इगुपधलक्षणः कः' इत्यात्रेयः । 'अकारादनुपपदात्कर्मोपपदो भवति विप्रतिषेधेन' इत्युक्तत्वात् तच्चिन्त्यम् ॥

स्वेनाभिप्रायेण ईरितुं शील†मस्येति स्वैरी—ताच्छील्ये णिनिः । ईरणमीरः स्वेनाभिप्रायेण ईरोस्मिन्निति स्वैरम्; स्वभावादयं क्रियाविशेषणं नपुंसकलिङ्गश्च । उभयत्र 'स्वादीरेरिणोः वृद्धिर्वक्तव्या' इति वृद्धिः ॥

ईर्मं व्रणम्—बाहुलकान्मः । दक्षिणमीर्ममस्य दक्षिणेर्मा मृगः, व्याधेन दक्षिणे पार्श्वे व्रणित इत्यर्थः । ईर्मशब्दो वृत्तौ धर्मिणि वर्तते । 'दक्षिणेर्मा लुब्धयोगे' इत्यनिजन्तो बहुव्रीहौ निपात्यते । अन्यत्र लुब्धयोगात्

---

*ख—ईरणः. †ख—ईरितुस्तच्छील.

दक्षिणेर्मं शकटम् इति भवति । ‘ईर क्षेपे’ इत्याधृषीयः ॥

## ईड स्तुतौ ॥१०॥

ईट्टे — ष्टुत्वचर्त्वे । ईडाते ईडिषे ईडिध्वे ईडे ईड्वहे — ‘ईडजनोर्ध्वे च’। अत्र ईश इति वर्तते से इति च। ईशीडजनानां सेध्वेशब्दयोस्सार्वधातुकयोः इतीट् ॥

ईडांचक्रे। ईडिता ईडितासे ईडिताहे। ईडिष्यते ॥

ईट्टां ईडातां ईडिष्व ईडिध्वं ईडै — ‘सवाभ्यां वामौ’ इति वामयोः कृतयोरप्येकदेशविकृतस्यानन्यत्वात् सेध्वेशब्दावेवेतीट् ॥

ऐट्ट ऐडातां ऐड्डाः ऐड्वम् — विकृतिग्रहणे प्रकृतिग्रहणाभावान्नेट्। ऐडि ऐड्वहि ॥

ईडीत ईडीथाः ईडिध्वम् ईडीय। आशिषि, ईडिषीष्ट ईडिषीष्ठाः ईडिषीध्वं ईडिषीय। ऐडिष्ट ऐडिध्वं ऐडिषि ॥

कर्मणि, ईड्यते इत्यादि ॥

ईडिडिषते। ईडयति। मा भवानिडिडत् ॥

इडा — ‘गुरोश्च हलः’ इत्यकारः। ‘इडाया वा’ इति निर्देशाद्ध्रस्वः ॥

ईड्यः स्तुत्यः—ण्यत् । 'ईडवदव्रजशंसदुहां ण्यतः' इत्याद्युदात्तत्वम् ॥

ईडेन्यः – औणादिक एन्यप्रत्ययो बाहुळकात् ॥

अयं चुरादौ च ॥

## ईश ऐश्वर्ये ॥११॥

धनस्य ईष्टे ईशिषे ईशिध्वे—व्रश्चादिना षत्वे ष्टुत्वं झलि पदान्ते च । 'अधीगर्थदयेशां कर्मणि' इति कर्मणि शेषे षष्ठी । अशेषत्वविवक्षायां धनमीष्टे ॥

ईशाञ्चक्रे इत्यादि पूर्ववत् ॥

ईशानः – लटश्शानच्, ताच्छीलिकश्चानश्वा ॥

वाचामीशो वागीशः—इगुपधलक्षणः कः । ननु कर्मणि शेषत्वेन विवक्षिते षष्ट्यां सिद्धायां पुनस्तद्विधानं समासनिवृत्त्यर्थमिति कथमधीगर्थषष्ठ्या समासः? सत्यम्, नायमधीगर्थषष्ठ्यास्समासः, किन्तु 'कर्तृकर्मणोः कृति' इत्यशेषषष्ट्याः । तदुक्तम् 'कृद्योगा च षष्ठी समस्यते' इति ॥

ईश्वरः—'स्थेशभास' इति वरच् । 'नेड्वशि कृति' इतीडभावः । ईश्वरा – टाप् । ईश्वरीत्यौणादिके वरटि टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः इत्यादयः । धनेष्वीश्वरः धनानामीश्वरः—'स्वामीश्वर' इति षष्ठीसप्तम्यौ शेषे । कथं धनेश्वर इति? या-

वता 'प्रतिपदविधाना च षष्ठी न समस्यते' इत्युक्तम्। सत्यम्; नात्र चकारेण षष्ठी पुनर्विधीयते, किन्त्वनया सप्तम्या मा बाधीत्यभ्यनुज्ञायते। यद्वा पूर्ववत् 'कर्तृकर्मणोः कृति' इति षष्ठ्यास्समासः। त्रैरूप्यं चेह साध्यम्॥

न ईश्वरः अनीश्वरः। न विद्यते वा ईश्वरो यस्य अनीश्वरः। तस्य भावः आनैश्वर्यं अनैश्वर्यम्— ब्राह्मणादिपाठात् ष्यञ्। 'नञश्शुचि' इत्यादिना उत्तरपदस्य नित्यं वृद्धिः पूर्वपदस्य तु वा। तत्पुरुषादपि 'न नञ्पूर्वात्' इति निषेधं बाधित्वा ब्राह्मणादिपाठात् ष्यञ्। बहुव्रीहौ सामान्येनैव सिद्धत्वात् तत्पुरुषार्थस्स पाठः॥

## आस उपवेशने॥ १२॥

आस्ते—अत्र 'अनचि च' इति द्वित्वपक्षे द्वौ सकारौ, अन्यदेकः। न च द्वित्वे 'स्कोः' इति सलोपप्रसङ्गः; द्वित्वस्यास्मिन्नासिद्धत्वात्। आस्से—अत्र द्वित्वपक्षे त्रयस्सकाराः। न च 'झलो झलि' इति लोपाद्भाव्यमेवेति मन्तव्यम्, तस्य विकल्पितत्वात्। आध्वे—'धि च' इति सलोपे धकारस्य द्वित्वे जश्त्वम्। आसे॥

आसांचक्रे—'दयायास:' इत्याम्।

आसिता आसिताहे। आसिष्यते। आस्तां आस्व आध्वं आसै। आस्त आसातां आस्थाः आध्वं आसि

आस्वहि । आसीत आसीथाः आसीय । आशिषि, आसिषीष्ट आसिषीष्ठाः आसिषीय ॥

आसिष्ट आसिषातां आसिष्ठाः आसिढ्वम् —'धि च' इति सिज्लोपे 'इणष्षीध्वम्' इति मूर्धन्यः । आशिषि तु* इटः प्रत्ययभक्तत्वेनाङ्गस्यानिट्त्वात् आसिषीध्वमित्येव† ॥

आसिसिषते । आसयति । मा भवानासिसत् ॥

ग्राममध्यास्ते—'अधिशीङ्स्थासां कर्म' इत्याधारस्य कर्मसंज्ञा । मासमास्ते मासमासनेन व्याप्नोतीत्यर्थः । सकर्मकव्यापनरूपधात्वर्थाङ्ग आसने धातोर्वृत्त्या व्यापनापेक्षं मासस्य कर्मत्वम् । एवं चास्य‡ मासादिना सकर्मकत्वेपि तत्रतत्राकर्मकग्रहणेषु कालभावाध्वगन्तव्यदेशव्यतिरिक्तेन कर्मणा अकर्मकाणां ग्रहणमिति आसयति मासं देवदत्तमिति प्रयोज्यस्य 'गतिबुद्धि' इति कर्मत्वं भवति । तथा 'अणावकर्मकात्' इति नित्यं परस्मैपदं च । एवं§ 'लः कर्मणि च' इत्यादिना विधीयमाना लादयोप्यस्य वस्तुनो मासादिना सकर्मकत्वात् अकर्मकत्वादकर्मकग्रहणेन ग्रहणाच्च भावकर्मणोरुभयोरपि भवन्ति; आस्यते मासं देवदत्तेन, आस्यते मासो देवदत्तेन । आसितव्यं मासं, आ-

---

*'आशिषि आसितु' इति विलिख्य किंचिद्विरम्य 'इटः' इत्यादि लिखितम् । क, ख कोशयोः ।

†'...मित्येव' इति विलिख्य किंचिद्विरम्य 'ते' इति लिखितम् क,ख कोशयोः ।

‡ख—एवमस्य. §क—एवं च.

सितव्यो मासः, स्वासं मासं, स्वासो मास इति तव्य-खलोः* — 'नलोकाव्यय' इति कर्मणि षष्ठ्या निषेधः। अयं च प्रकारः 'अकथितं च' 'कालाध्वनोः' इत्यादौ भाष्यकैय्यटपदमञ्जर्यादिषु स्फोरितः। अस्माभिरपि भवतौ प्रपञ्चितः। ननु कटे आस्त इत्यादौ मासादिवत् व्याप्त्यपेक्षया कटादेरपि कर्मत्वेन भाव्यम्। अत्र कैयटकारः, 'नियतत्वाच्च प्रयोगस्य कट आस्ते इत्यादौ त्वासनमात्रेनङ्गीकृतक्रियान्तरे आसिर्वर्तत इत्यतिप्रसङ्गो नोद्भावनीयः' इति ॥

आसीनः—'ईदासः' इत्यासः परस्यानस्यादेरीकारः ॥

आसना—'ण्यासश्रन्थः' इति युच् ॥

आस्या—वासरूपविधानाण्ण्यत्। 'अस्त्रियाम्' इति निषेध उभयोरपि स्त्र्यधिकारविहितस्त्र एवेति। बाहुळकात् क्तिन्नपि भवति उपास्तिरिति ॥

उपासितो गुरुं शिष्यः, उपासितो गुरुश्शिष्येण — 'गत्यर्थाकर्मक'† इत्यादिना कर्तृकर्मणोः क्तः, उपसर्गवशात्कालादिव्यतिरिक्तेनापि सकर्मकत्वात् ॥

कैलासः—केळिः प्रयोजनमस्य कैलः। 'चूडादिभ्य उपसङ्ख्यानम्' इत्यण्। आस्यते अस्मिन्नित्यासः, 'ह-

*ख—असादिभ्य. †क, ख—क्तखलोः.

लश्च' इत्यधिकरणे घञ् । कैलश्चासावासश्च इति 'विशेषणं विशेष्येण' इति संज्ञात्वात् लोहितशाल्यादिवन्नित्यसमासः ॥

## आङःशासु इच्छायाम् ॥१३॥

आशास्ते आशासाते आशास्से आशाध्वे आशासे— 'शास इदङ्हलोः' इत्यङि हलादौ क्ङिति च विधीयमानमुपधाया इत्वमस्य न भवति, संयोगस्य विशेषे स्मृतिहेतुत्वात् अङ्सम्बन्धिन एव शासेस्तत्र ग्रहणात् । अस्य च नाङ्सम्बन्धः, 'सर्तिशास्ति' इत्यत्र सर्त्यर्तिभ्यां परस्मैपदिभ्यां साहचर्यात्तादृश एव शासेर्ग्रहणमिति ॥

आशशासे आशशासाते आशशासिषे आशशासिध्वे आशशासिवहे । आसिवदन्ये लकाराः ॥

आशिशासिषते । आशाशास्यते । आशाशासीति आशाशास्ति आशाशास्सि । आशासयति ॥

आशीः—'आङःशासः क्वौ' इतीत्वे सकारस्य रुत्वे 'र्वोरुपधायाः' इति दीर्घः । 'क्षियाशीः' इत्यादिनिर्देशाद्वेत्वम् । आशिषावित्यादौ 'शासिवसि' इत्यादिना षत्वम् । तत्र हि न केवलं शासनार्थस्य ग्रहणम्, किन्तु, अस्य च । तथा च 'आशिषि लिङ्लोटौ' इति निर्दिश्यते ॥

आशिषा–'आपं चापि हलन्तानाम्' इत्यात्रेयः ॥

अन्या आशीः अन्यदाशीः – 'अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु' षष्ठीतृतीयाव्यतिरिक्तविभक्त्यन्तस्यान्यशब्दस्य आशीरादिषूत्तरपदेषु छे च प्रत्यये दुगिति दुगागमः । षष्ठीतृतीयान्तत्वे त्वन्याशीः । अत्र 'अषष्ठ्यतृतीयास्थस्य' इति निषेधः कारकच्छव्यतिरिक्तविषयः – उक्तं च

दुगागमोऽविशेषेण वक्तव्यः कारकच्छयोः ।
षष्ठीतृतीययोर्नेष्ट आशीरादिषु सप्तसु ॥ इति ॥

आशिषं करोति आशिषयति इत्यत्र 'सोपसर्गात्सङ्ग्रामयतेरेव' इति नियमात् शीशब्दादेव णिजुत्पत्तौ 'प्रकृत्यैकाच्' इति प्रकृतिभावात् 'णाविष्ठवत्' इति टिलोपो न भवति ॥

अत्र आत्रेयमैत्रेयस्वामिकाश्यपाः अमुमुदितं पठित्वा 'नाग्लोपिशास्' इत्यत्रास्यापि सामान्येन ग्रहणात् आशशासत् इत्युपधाह्रस्वनिषेधो भवतीति । आत्रेयमैत्रेयौ तु प्रयोजनान्तरमप्याहतुः "'क्त्वापि छन्दसि' इति ल्यपोपवादे क्त्वादेशे आशास्त्वा आशासित्वा इति इड्विकल्पः । निष्ठायां 'यस्य विभाषा' इतीट्प्रतिषेधात् आशास्तः आशास्तवान् इति भवति" इति । वर्धमानसम्मताकारहरदत्तगर्ग–

स्नु* अनुदितं पठित्वा 'नाग्लोपि' इत्यत्रोदितोनुशासनार्थस्यैव ग्रहणात् अस्य ह्रस्वनिषेधाभावात् आशिशसत् इति ह्रस्वो भवत्येवेत्याहुः । वर्धमानादिमते निष्ठायां आशासित इति भवितव्यम् । अत्र हरदत्तेन —

शक्यश्शासिग्रहोकर्तुमृदिदेष पठिष्यते ।
ऋशासु अनुशिष्टावित्येवमेके प्रचक्षते ॥

इत्यनुशासनार्थस्य शासेः मतान्तरसिद्धमृदित्पाठमाश्रित्य ऋदित्त्वादेवोपधाह्रस्वनिषेधसिद्धेः शासिग्रहणं न कर्तव्यमित्यभिधानात् तन्मतेप्यस्य शासेः ऋदित्त्वमनभिमतं प्रतीयते । उदित्त्वे शास्त्रनुकरणमेतदर्थं स्यादिति कथं प्रत्याख्यायेत । एवमृदित्त्ववादिनां शासिग्रहणे निरर्थके यन्मतान्तरेण फलमुक्तं हरदत्तेनैव —

'वदन्त्यन्ये तु सूत्रेस्मिन् शासिं निरनुबन्धकम् ।
पठन्तः प्रतिषेधोस्य यङ्लुक्यपि भवेदिति ॥'

तदयुक्तम् ; प्रकृतौ निरर्थकत्वे हि विकृत्यर्थत्वं शासिग्रहणस्य । इहत्वाशासेः मुक्तानुबन्धस्यानुवादत्वेन प्रकृत्यर्थत्वं शक्यते वक्तुम् । "प्रायेणायमाङ्पूर्व इति 'नमोवाकं प्रशास्महे' इति भवभूतिप्रयोगोपपत्तिरिति" अत्रेयः । 'एतिस्तुशास्वृ' इत्यत्र उदितो निर्देशात् नास्मात्क्यपः प्रसङ्ग इति, आशास्यः इति ण्यदेव । येषामस्याप्युदित्त्वेन "वय-

* क—......डाकारौ । दीर्घास्तु.

बिष्टः तेषामप्याशास्य इत्येव रूपं ; यस्मात् ' शास इदङ्हलोः ' इतीत्वं अस्य नास्तीति प्रागेवोक्तम् ॥

आशासा — ' गुरोश्च हलः ' इत्यकारः ॥

आशंसते इतीच्छायाम् , शंसतीति स्तुतौ , शसतीति हिंसायां शपि । शास्तीत्यनुशासनेऽग्रे ॥

## .वस आच्छादने ॥ १४ ॥

निवासे वसतीति गतं शपि ॥

वस्ते वस्से वध्वे वसे ॥

ववसे ववसिषे ववसिवहे ' न शसददवादि ' इत्येत्वाभ्यासलोपनिषेधः ॥

वसितेत्याद्यासिवदुदाहार्यम् ॥

विवसिषते । वावस्यते । वावसीति वावस्ति ॥

वासयति वस्त्रं देवदत्तेन, वासयते इति वा । यदा तु व्यापारान्तरनिवृत्तिपरायां चोदनायां अविवक्षितकर्मकोयमकर्मकः तदा ' अणावकर्मकात् ' इति परस्मैपदमेव । ' गतिबुद्धि ' इत्यादिना प्रयोज्यः कर्म, देवदत्तं वासयतीति । ' न पादमि ' इत्यत्र लुग्विकरणत्वान्नास्य ग्रहणमित्युक्तम् । अत एव ' प्रेलपस्तुद्रुमथ ' इत्यादावपि नास्य ग्रहः ॥

वसित्वा ॥

वसितं — ' वचिस्वपि ' इति सम्प्रसारणस्य नात्र प्रसङ्गोस्यायजादित्वात् ॥

वस्यते आच्छाद्यते अनेनेति वसनम् — करणे ल्युट् । यद्वा, वस्ते छादयतीति 'अनुदात्तेतः' इति कर्तरियुच् ॥

वस्त्रम् — ष्ट्रन् * ॥

वस्त्रेण समाच्छादयति संवस्त्रयति—'मुण्डमिश्र' इत्यादिना णिच् । 'वस्त्रात्समाच्छादने' इति वृत्तिः ॥

वासः, वाससी — 'वसेर्णिच्च' इत्यसुनि णित्त्वाद्वृद्धिः ॥ कृत्तिर्वासोस्यास्तीति कृत्तिवासाः—'अत्वसन्तस्य च' इत्यसम्बुद्धौ सौ दीर्घः । अकारान्तस्तु कृत्तिं वस्त इति कर्मण्यणि । चर्मवः इत्यादिप्रयोगः चर्मवस्त इति — 'क्विप्च' इति क्विप् । 'क्विबन्ता धातुत्वं न जहति' इति 'अधातोः' इति निषेधान्न 'अत्वसन्तस्य' इति दीर्घः । अयमेव 'अधातोः' इति निषेधः 'क्विबन्ता धातुत्वं न जहति' इत्यस्य मूलम् ॥

वसा शरीरान्तर्गतस्नेहद्रव्यम् † — पचाद्यचि टाप् । तद्धि तद्व्याप्य तिष्ठति ॥

## कसि गतिशासनयोः ॥ १५ ॥

कंस्ते कंसाते कंसते कंस्से कन्ध्वे—'धि च' इति सलोपः । अत्र 'अयोगवाहानामट्सु णत्वं........अविशे-

* ख. कोशे इदं वाक्यं न दृश्यते. † ख—...स्नेहः.

षेण संयोगोपधासंज्ञालोन्त्यद्विर्वचनस्थानिवत्प्रतिषेधाः '* इति यत्र यत्र प्रयोजनं तत्र तत्रायोगवाहानामुपदेशस्य चोदितत्वादनुस्वारस्य अच्त्वाश्रयेण दकारस्य 'अनचि च' इति द्विर्वचने पूर्वस्य जश्त्वे अनुस्वारस्य परसवर्णे नकार दकारधकारवकारास्संयुज्यन्ते । द्विर्वचनाभावे तु दकारस्याभावादन्ये त्रयः । ननु द्वित्वपक्षेपि 'झरो झरि सवर्णे' इति दकारस्य लोपे त्रिभिर्व्यञ्जनैरेव संयोगस्स्यात् । मैवं, अस्य विभाषितत्वात् । एवं कंस्त इत्यादावपि सकारस्य हल्परत्वे पक्षे द्विर्वचनं द्रष्टव्यम् । न च 'स्कोः' इति सलोपस्य विद्यमानत्वाद्द्विर्वचनमकृतसममिति मन्तव्यम्, अस्मिन् द्विर्वचनस्यासिद्धत्वात् । कंस्वहि इत्यादौ झल्परत्वाभावाच्च न लोपप्रसङ्गः । न च 'झरो झरि' इति सलोपेनैव वैयर्थ्यमाशङ्क्यम्, तस्य विकल्पितत्वात् । एवमुदाहरणेषु द्वौ सकारावेको वा । मध्यमैकवचने द्वित्वे त्रयस्सकाराः, अद्वित्वे 'झरो झरि' इति यदा लोपस्तदैकः, अन्यदा तु द्वौ ॥

चकंसे चकंसिषे चकंसिवहे । कंसिता । कंसिष्यते । कंस्तां कंस्व कन्ध्वं कंसै । अकंस्त अकंस्थाः अकंसि । कंसीत कंसीथाः कंसीय । आशिषि, कंसिषीष्ट । अकंसिष्ट अकंसिष्ठाः अकंसिषि ॥

चिकंसिषते । चाकंस्यते । चाकंस्ति ॥

---

* हयवरट् सूत्रे भाष्ये.

लङि तिप्सिपोः हल्ङ्यादिलोपे संयोगान्तलोपे च अचाकन् ॥

कंसयति । अचकंसत् ॥

सर्वत्र इदित्वान्नुम् । अत एव कंस्यते इत्यादौ नलोपाभावः । अयं पाठो मैत्रेयात्रेयादीनां । अन्ये तु तालव्यान्तमनिदितमधीयते । तथा च 'प्रतिष्कशश्च कशेः' इत्यत्र वृत्तिः 'कश गतिशासनयोः' इति । भूसूत्रे सुधाकरश्च "पारायणिकैः अयमिदिह्नन्त्यान्त्य उदाहारि, अन्यैस्तु 'प्रतिष्कशश्च कशेः' इति दर्शनात्तालव्यान्तस्समाम्नायि" इति । 'घृतस्य धारा अभिचाकशीमि' इत्यत्र भट्टभास्करश्च 'कशेर्गतिकर्मणो यङ्लुकि रूपम्' इति । तथा 'नाभ्यस्तस्य' इत्यत्र च वृत्तौ 'पस्पशाते चाकशीति वावशीति' इत्याद्युदाहृत्य 'छान्दसं ह्रस्वत्वं द्रष्टव्यम् । पस्पशाते इत्यभ्यासह्रस्वत्वं च । प्रकृत्यन्तराणां वा स्पाशिवाशिकशीनां एतानि रूपाणि' इत्युक्तम् । अत्र हरदत्तादयः 'स्पाशिवाशिककारवचनादपठितोपि धातुरस्ति । काशृ दीप्तौ, वाशृ शब्दे' इत्याद्युक्त्वा 'प्रकृत्यन्तराणाम्' इति विवृण्वाना आहुः 'कश गतिशासनयोः' इति । कैयटे च 'स्पशिवशिकशयः प्रकृत्यन्तराणि' इति भाष्यमुपादाय "स्पश बाधनस्पर्शनयोः' 'कश गतिशासनयोः' इति केचित्पठन्ति । अन्ये तु 'कस गतिशासनयोः' इति । तन्मते तु कशिस्सौत्रो धातुर्द्रष्टव्यः" इत्युक्तम् । अत्र धातौ क्षीरस्वामी 'कसेत्येके' इति दन्त्यान्तमनिदितमपि

पपाठ । प्रदेशान्तरे चाह ‘ कशि गतिशासनयोः इति इ-
कारान्तोकारान्तश्शकारान्तश्च पठ्यते ’ इति ॥

कष्टे — व्रश्चादिषत्वे ष्टुत्वम् । कशाते कक्षे—षत्वे कत्वम् । कड्ढ्वे — षत्वे, धकारस्य ष्टुत्वे, षकारस्य जश्त्वं डकारः । कशे कश्वहे ॥

चकशे चकशिषे चकशे चकशिवहे । कशिता । कशिष्यते । कष्टां कक्ष्व कशै । अकष्ट अकष्टाः अकशि । कशीत कशीथाः कशीय । आशिषि, कशिषीष्ट अक-शिष्ट अकशिष्ठाः अकशिषि ॥

चिकशिषते । चाकश्यते । चाकशीति । काशयति । अचिकशत् ॥

कशा — पचाद्यचि टाप् ॥

कशामर्हति कश्यं अश्वानां मध्यम् — दण्डादित्वाद्यत् ॥

प्रतिष्कशः वार्तापुरुषस्सहायः पुरोयायी वा—‘ प्रतिष्कश-श्च कशेः ’ इति प्रतिपूर्वस्य कशेरचि सुट् षत्वं च नि-पात्यते । ‘ प्रतिष्कशः ’ इत्येतावत्येव सूत्रणीये यत्कशेरिति वचनं प्रतेः कशिसम्बन्धित्वे निपातनं यथा स्यादिति । तेन कशां प्रनिगतः प्रतिकशः अश्व इत्यत्र न भवति । अत्र हि प्रतिर्गमिसम्बन्धी । अनिदित्सान्तपक्षे कस्त इत्या-दि द्रष्टव्यम् ॥

## णिसि चुम्बने ॥ १६ ॥

इदिद्दन्त्यान्तः । निंस्त इत्यादि कसिवत् । अत्र आत्रेयादयः ‘ प्रणिंस्ते प्रनिंस्ते ’ इत्याद्युदाहृत्य ‘ वा निंस ’ इति णत्वविकल्पमाहुः । अस्माभिस्तु तत्कृति पर इति निन्दतावुपपादितम् । कश्चित्तालव्यान्तं पठित्वा ‘ वा निंश ’ इति सूत्रमिति स्वपाठानुगुणं पपाठ । तत् ‘ नुम्विसर्जनीयशर्व्यवायेऽपि ’ इत्यत्र वृत्तिन्यासपदमञ्जर्याद्यपर्यालोचनविजृम्भितम् । तत्र हि ‘ नुमादिभिः प्रत्येकं व्यवाये षत्वमिष्यते । तेन निंस्से निंस्स्वेत्यत्र न भवति ’ इत्युक्तम् । अस्य तालव्यान्तत्वे व्रश्चादिषत्वे ‘ षढोः ’ इति कत्वे कवर्गात्परत्वेन षत्वं दुर्वारमिति कथं प्रत्युदाह्रियते ॥

## णिजि शुद्धौ ॥ १७ ॥

निङ्क्ते — कुत्वे चर्त्वम् । निञ्जाते निञ्जते । निङ्क्षे इत्यत्र कुत्वषत्वचर्त्वानुस्वारपरसवर्णाः ॥

निनिञ्जे निनिञ्जिषे । निञ्जिता । निञ्जिष्यते । निङ्क्ताम् । अनिङ्क्त । निञ्जीत । आशिषि, निञ्जिषीष्ट । अनिञ्जिष्ट । निनिञ्जिषते । नेनिञ्ज्यते ॥

इदित्त्वान्नुम् सर्वत्र । अत एव क्ङिति नलोपाभावः ॥

नेनिञ्जीति । नेनिङ्क्ति । निञ्ज्यति । अनिनिञ्जत् ॥

पचिं वचिं विचिरिचिरञ्जिपृच्छतीन्
निजिं सिचिं मुचिभजिभञ्जिभृज्जतीन् ।

इत्यत्र निरनुषङ्गपाठात् ' निजिर् शौचपोषणयोः ' इति जौ-होत्यादिकस्यैव ग्रहः । अयं सेडुदाहृतः ॥

## शिजि अव्यक्ते शब्दे ॥ १८ ॥

शिङ्क्ते इत्यादि पूर्ववत् । ' ताळैश्शिञ्जत् ' इति आ-त्मनेपदानित्यत्वज्ञापनादिति चष्टावुक्तम् ॥

शिञ्जा – पचाद्यचि टाप् । ' गुरोश्च हलः ' इत्यकारो वा ॥

शिञ्जिनी – आवश्यकणिन्यन्तात् ङीष् ॥

## पिजि वर्णे ॥ १९ ॥

सम्पर्चन इति शाकटायनः । उभयत्रेति सम्मता । अ-वयव इति काश्यपः । अयं च शिञ्जिश्च द्वावप्यव्यक्त-शब्द इति काश्यपः [कौशिकः]। पिङ्क्ते इत्यादि पूर्ववत् ॥

पिङ्गः – घञ् ॥

पिञ्जरः, पिङ्गळः* – बाहुळकादरालौ ॥

* ख–पिञ्जरं पिङ्गलम्.

पुरुषपिङ्गळः पिङ्गळपुरुषः — ‘ कडाराः कर्मधारये ’ इति विशेषणस्य वा परनिपातः । कडारादिपाठादेव जकारस्य गकारः ॥

पिङ्गली — गौरादिपाठात् ङीष् ॥

पिङ्गलिमा, पैङ्गल्यम् । ‘ वर्णदृढादिभ्यः ष्यञ् च ’ इति इमनिच्ष्यञौ ॥

पिञ्जूलः शूलं सङ्घातः* ‘ खर्जिपिञ्जादिभ्य ऊरोलचौ ’ इत्यूलच् ॥

‘ पृजि इत्येके पृङ्क्ते ’ इति मैत्रेयः । एवमात्रेयश्च । पिजि भाषार्थः, ‘ तुजि पिजि हिंसाबलादाननिकेतनेषु ’ इति चुरादौ ॥

## वृजी† वर्जने ॥ २० ॥

दन्त्योष्ठ्यादिः । ईदिदित्यात्रेयादयो दौर्गाश्च । वृक्ते‡ वृजाते वृक्षे वृग्ध्वे वृजे ॥

ववृजे ववृजिषे ववृजिवहे ॥

वर्जिता । वर्जिष्यते ॥

वृक्तां वृक्ष्व वर्जै वर्जावहै — आटि गुणः ॥

अवृक्त अवृक्थाः अवृजि ॥

---

* ख—शूलसङ्घातश्च. † ख—वृजि.

‡ अत्र ख. कोशे ‘ वृङ्क्ते ’ इत्यादिः नुम्घटितपाठो दृश्यते ।

वृजीत वृजीथाः वृजीय । आशिषि, वर्जिषीष्ट – अत्र 'लिङ्सिचौ' इत्यत्र 'झलित्यनुवर्तनान्न किन्त्वम् ॥

अवर्जिष्ट अवर्जिष्ठाः अवर्जिषि ॥

विवर्जिषते ॥

वरीवृज्यते – रीगभ्यासस्य ॥

वर्वर्क्ति – रुगागमः । रिग्रीकोरप्युदाहार्यम् ॥

वर्जयति । अवीवृजत् अववर्जत् – 'उर्‌त्' इत्यृकारो वा गुणापवादः ॥

वर्जित्वा ॥

वृक्तम् – निष्ठायां 'श्वीदितः' इत्यनिट्त्वम् ॥

वृज्यः* – 'ऋदुपधाच्च' इति क्यप् ॥

वृजयो जनपदाः† । 'इगुपधात्किच्च' इतीन्प्रत्ययः किन्त्वान्न गुणः ॥

वृजिषु भवो वृजिकः – 'मद्रवृज्योः कन्' इति कन्प्रत्ययः शैषिकः ॥

वर्गः – घञि कुत्वम् ॥

वर्गे भवो वर्ग्यः – दिगादित्वाद्यत् । कवर्गीयः – 'वर्गान्ताच्च' इति भवार्थे छप्रत्ययः । वासुदेववर्गे भवो वासुदेववर्ग्यः, वासुदेववर्गीणः – 'अशब्दे यत्खावन्यतरस्याम्' इति यत्खौ । अन्यतरस्यां ग्रहणात् छ च, वासुदेववर्गीय इति ॥

वृजिनं पापं – 'वृजेः किच्च' इतीनच् । किन्त्वान्न गुणः ॥

---

* ख–वृज्या. † ख—वृजिः जनपदः.

वृजनं — 'कृपृवृजिमन्दिनीधाञ्भ्यः क्युन्' इति क्युन्यनादेशः ॥

अयं रुधादौ युजादौ च । अयमिदिदिति मैत्रेयः । तथा चाधीयते 'चक्षुरेव भ्रातृव्यस्य वृङ्क्ते' इति । तथा शाबरभाष्ये च प्रवृञ्जनमिति प्रयुज्यते । तथा च स्वामी । वृज* इति दौर्गाः, तेषां वृक्ते वर्जितेति । शाकटायनस्यापीदित्त्वमेवेष्टम् । यथाह — 'पिजु वृजु† पृचै संपर्चने' इति । तेन ह्युदि‡दिदित्स्थाने क्रियते, ऐदिदीदित्स्थाने । तन्मते पूर्वोयं वक्ष्यमाणा[ण]श्च त्रयस्संपर्चनार्थाः ॥

वृञ्जाते§ वृञ्जते वृङ्क्षे वृञ्जे । ववृञ्जे । वृञ्जिता । वृञ्जिष्यते वृङ्क्ताम् । अवृङ्क्त । वृञ्जीत । आशिषि, वृञ्जिषीष्ट । अवृञ्जिष्ट ॥

विवृञ्जिषते । वरीवृञ्ज्यते । वृञ्जयति । अववृञ्जत् ॥

## पृची सम्पर्चने ॥ २१ ॥

ओष्ठ्यादिः ईदित् । पृक्ते इत्यादि वृजिवत् । उदिदिति दुर्गकाश्यपनन्दिधनपालादयः । इदित् तृतीयान्त इति कौशिकः । ईदिदित्येव परे । तत्र वृत्तौ सम्पृचादिसूत्रे 'पृची सम्पर्क इति रुधादिर्गृह्यते न त्वदादिः' इत्यभिधानेन प्रथमान्त ईदिदेव

---

* ख—वृजि. † ख—पिजा वृजा. ‡ ख—ह्यू.

§ खकोशे 'वृञ्जाते' इत्यादौ 'वृजाते' इत्यादिः नुमघटितपाठो दृश्यते ।

युक्तः। उणादिवृत्तौ पर्जन्यशब्दव्युत्पादने 'अर्जेः पर्ज वा*' इत्यन्यप्रत्यये पर्जादेशविधानाच्च अयुक्तस्तृतीयान्तपाठः। 'पिजु वृजु †पृचै सम्पर्चने' इति पठन् शाकटायनोऽप्यत्रैवानुकूलः। तेन हुडु‡दि दिदित् स्थाने क्रियते ईदित् स्थाने चैदिदित्युक्तम्। अयं रुधादौ च। 'युज पृच संयमने' इति [चुरा]दौ। ईरादयोऽनुदात्तेतः॥

## षूङ् प्राणिगर्भविमोचने ॥ २२ ॥

सूते सुवाते सुवते सूषे सूध्वे सुवे सूवहे — अजादावुवङ्। सुषुवे सुषुवाते सुषुविषे सुषुविध्वे सुषुविढ्वे — 'विभाषेटः' इति। सुषुविवहे — 'आदेशप्रत्यययोः' इतीणः परस्य षत्वम्। 'श्र्युकः किति' इति निषेधोऽत्र स्वरत्यादिविकल्पनात्पूर्वं निषेधकाण्डस्य प्रारम्भाद्बलवत्तरः। स च क्रादिसूत्रेण बाध्यते तत्र वृग्रहणात्। तेनेण्णित्यः। एतच्च स्वरतावुपपादितम्॥

सोता सविता। सविष्यते सोष्यते—स्वरत्यादिना इड्विकल्पः॥

सूतां सुवातां सूष्व सुवै—आटि पित्त्वादङित्त्वे 'भूसुवोस्तिङि' इति निषेधान्न गुणः॥

असूत असुवातां असूथाः असूध्वं असुवि असूवहि॥

सुवीत सुवीयातां सुवीथाः सुवीय। आशिषि, सविषीष्ट सविषीयास्तां सविषीरन् सविषीष्ठाः सविषीढ्वं सविषीध्वं सविषीय। सोषीष्ट सोषीयास्तां सोषीरन् सोषीष्ठाः सोषीढ्वं सोषीय — आर्धधातुकत्वात् स्वरत्या-

---

* ख—पर्जन्य च.  † ख—पिजा वृजा.  ‡ ख—भू.

दिनेड्विकल्पः । अत एव 'भूसुवोस्तिङि' इति गुणनिषेधोपि न भवति, स हि सार्वधातुकविषयः । 'इणष्षीध्वम्' इति नित्यो मूर्धन्योनिट्पक्षे । इट्पक्षे तु गुणावादेशयोः 'विभाषेटः' इति मूर्धन्यविकल्पः । एवं लुङ्यपि भवति । असविष्ट असविषातां असविष्ठाः असविध्वं असविढ्वं असविषि असविष्वहि । असोष्ट असोषातां असोष्ठाः असोढ्वं असोषि ॥

सुसूषते – 'स्तौतिण्योरेव' इति नियमान्न षत्वम् । सनि ग्रहगुहोश्च' इति चशब्देन उकोनुकर्षणात् इण्णिषेधः । श्र्युकःकितिवददोपि स्वरत्यादिविकल्पं बाधते । उक्तं च न्यासे; " 'श्र्युकः किति' 'सनिग्रहगुहोश्च' इति पूर्वं विधेरप्रतिषेधसामर्थ्याद्ब*लीयस्त्वं प्रतिषेधनियमस्य" इति ॥

सोषूयते । सोषूति । सोषुवीति – 'प्रकृतिग्रहणे यङ्लुगन्तस्यापिग्रहणम्' इति 'भूसुवोस्तिङि' इति गुणनिषेधः ॥

सावयति । असूषवत्—णौ कृतस्य स्थानिवद्भावात् सूशब्दस्य द्विर्वचनम् ॥

कर्मणि, सूयते असावि इत्यादि । स्यादिषु वा चिण्वदिट्, साविष्यते इत्यादि । अन्यदा कर्तृवदिड्विकल्पे द्वैरूप्यम् । तदेवं त्रीणि रूपाणि भवन्ति लुङ्लिङोः ध्वमि तु शुद्ध इटि वाचिण्वदित्यपि 'विभाषेटः' इति मूर्धन्यविकल्पनात् पञ्च रूपाण्युदाहार्याणि । एवं कर्मक-

* ख–त्तु ब.

र्त्र्यपि । लुङ्येकवचने तु 'अचः कर्मकर्तरि' इति चिण्सिचौ द्वौ भवतः । सिचश्च वा चिण्वदिट् । तदभावे शुद्धेट् विकल्पश्चेति चातूरूप्यं ; असावि असाविष्ट असविष्ट असोष्ट इति ॥

गोषु प्रसूतः, गवां प्रसूतः—'स्वामीश्वर' इत्यादिना शेषे षष्ठीसप्तम्यौ भवतः । तत्र षष्ठी सप्तम्या मा बाधीति पक्षे केवलमभ्यनुज्ञायते न पुनर्विधीयते इति प्रतिपदविधानाभावात् गोप्रसूत इति समासोपि भवति । ईशावयमर्थः प्रपञ्चितः ॥

पुत्रसूः प्रसूः—'सत्सूद्विष' इत्यादिना कर्मण्युपसर्गे चोपपदे क्विप् । तत्र यद्यपि 'सुपि' इति चानुवर्तते, तथापि तस्याकर्मकैरेव सम्बन्ध इति गृहे सूत इत्यत्र क्विब्न भवति । अयं च क्विब्विधिः द्विषा साहचर्यात् लुग्विकरणस्वेप्यस्यैव भवति । न तु 'षूङ् प्राणिप्रसवे' इति दैवादिकस्य । नापि 'षू प्रेरणे' इति तौदादिकस्य ॥

सूत्वा—'श्र्युकः किति' इतीण्णिषेधः ॥

सूतः सूतवान्—इत्यत्रानेन वा 'यस्य विभाषा' इति वा इडभावः ॥

सूतका सूतिका—स्वार्थे कनि 'केणः' इति टापो ह्रस्वः । 'वा सूतकापुत्रकावृन्दारकणाम्' इति अत इत्वविकल्पः ॥

प्रसवः—'ऋदोरप्' घञोपवादः ॥

सुषूतिः विषूतिः निःषूतिः दुष्षूतिः—'सुविनिर्दुर्भ्यस्सुपिसूतिसमाः' इति स्वादिभ्यः परस्य सुप्यादेस्सकारस्य षत्वम् । 'सुपि' इति कृतसम्प्रसारणस्य स्वपेर्निर्देशः । इतरयोस्तु स्वरूपग्रहणमिति सुसूत इत्यत्र 'सात्पदाद्योः' इति निषेध एव भवति ॥

सूरिः—'सूङः क्रिः' इति क्रिः । 'स्त्रीविवक्षायां कृदिकाराद्वा ङीष्' इत्यात्रेयः ॥

सूरः—'सुसूधागृधिभ्यः क्रन्' इति क्रन् ॥

सूनुः—'सुवः कित्' इति नु प्रत्ययः । कित्त्वान्न गुणः । अलुग्विकरणाद्वा व्युत्पाद्यः ॥

पुमान्—अस्माद्धातोः डुमसुन्प्रत्ययः । सकारस्य च पकारः । डकारष्टिलोपार्थः । अकार उच्चारणार्थः । अन्त्यउकार उगित्कार्यार्थः । नकारस्स्वरार्थः । 'पुंसोऽसुङ्' इति सर्वनामस्थानेऽसुङादेशो ङित्त्वादन्त्यस्य । उकार उच्चारणार्थः । प्रत्ययस्योगित्त्वात् सर्वनामस्थाने नुम् सिद्धः । 'सान्तमहतस्संयोगस्य' इति संयोगात्पूर्वस्य असम्बुद्धौ सर्वनामस्थाने दीर्घः । सम्बुद्धौ त्वसुङि नुमि संयोगान्तलोपे हे पुमन् इति । पुमांसावित्यादौ 'नश्चापदान्तस्य झलि' इत्यनुस्वारः । अजादावसर्वनामस्थाने पुंस इत्यादि । हलादौ तु पूर्वस्य पदत्वात्संयोगान्तलोपे मोनुस्वारे तस्य च 'वा पदा-

न्तस्य ' इति यथि वा परसवर्णे पुम्भ्यां पुंभ्यामित्यादि। पुंस्वित्यत्र 'नुम्विसर्जनीयशर्व्यवायेपि' इति षत्वं न भवति, नुमो योनुस्वारः तस्यैव नुम्ग्रहणेन तत्र ग्रहणात्। अयम-सुङादेशोङ्गाधिकारे विहितत्वात्तदन्तस्यापि भवतीति परम-पुमान् इत्यादावपि भवति। बहवः पुमांसो यस्यामिति बहुव्रीहौ बहुपुंसीत्यत्र अन्तर्वर्तिनः सर्वनामस्थानस्य लुका लुप्तत्वात् प्रत्ययलक्षणाभावात् न सर्वनामस्थानपरत्वमित्य-सुङ् न भवति, डुमसुन्प्रत्ययस्योगित्त्वान्ङीप्। उरःप्रभृतिषु पुमानित्येकवचनान्तपाठात् तेनैव समासे नित्यः कप्। अन्यत्र 'शेषाद्विभाषा' इति विकल्प इति कबभावः। यदा कप् तदा प्रातिपदिकस्य कबन्तत्वेनोगिदन्तत्वाभावात् टाब्भवति बहुपुंस्केति। अत्र सकारस्य संयोगान्तलोपे म-कारस्य 'सम्पुङ्कानां सः' इति 'पुमः खय्यम्परे' इति रुत्वापवादस्सकारः। 'अत्रानुनासिकः पूर्वस्य तु वा' इत्युकारस्य वा अनुनासिकादेशः। नन्वत्रग्रहणस्य रुणा सह सन्नियोगप्रतिपत्त्यर्थत्वात्कथमत्रानुनासिकः? नैष दोषः; रुप्रकरणे यद्विधीयते तदुपलक्षणार्थत्वादत्रग्रहणस्य। यदा अ-नुनासिकस्तदा 'अनुनासिकात्परोनुस्वारः' इत्युकारात्परोनु-स्वारः। अत्र अन्यशब्दाध्याहारेणानुनासिकादन्यो यो वर्ण-स्ततः परोनुस्वार इति सूत्रार्थः। एवं नपुंसकेप्यन्तर्वर्तिन स्सर्वनामस्थानस्य लुप्तत्वादसुङ् न भवति बहुपुम् नगरमिति। सकारस्य संयोगान्तलोपः। बहुपुंसी इत्यत्रान्तर्वर्तिनीं लु-प्तां विभक्तिमाश्रित्य प्रत्ययलक्षणेन तदन्तत्वेन पदत्वात्स-

कारस्य संयोगान्तलोपो नाशङ्क्यः ; 'उत्तरपदत्वे चापदादिविधौ' इत्युत्तरखण्डस्य प्रत्ययलक्षणेन पदत्वनिषेधात् । यद्वात्र भसंज्ञया पदसंज्ञाया बाधनान्नैव सलोपप्रसङ्गः । बहुपुमांसीत्यत्र शेः सर्वनामस्थानत्वादमुङादि । तृतीयादिषु पुल्लिङ्गवत् ॥

पौंस्नं – अपत्यादौ 'स्त्रीपुंसाभ्याम्' इति स्नञ् ॥

पुम्स्त्वं पुम्स्ता – स्नञा त्वतलोर्न बाध इति स्त्यायतावुक्तम् ॥

पुंवदिति वतिर्निपातनात् ॥

स्त्री च पुमांश्च स्त्रीपुंसौ – अचतुरादावितरेतरयोगे द्वन्द्वे अजन्तो निपातितः । तत्पुरुषे तु स्त्रियाः पुमान् स्त्रीपुमानित्येव ॥

न स्त्रीपुंसौ नपुंसकः—'न भ्राट्' इत्यादौ निपातनान्नञः प्रकृतिभावः । स्त्रीपुंशब्दस्य च पुंसकादेशः ॥

## शीङ् स्वप्ने ॥ २३ ॥

शेते शयाते शेरते शेषे शेध्वे शये शेवहे—'शीङस्सार्वधातुके गुणः' इति गुणः । 'शीङो रुट्' इति झादेशस्याच्छब्दस्य रुट् । अस्य परादित्वादिगन्तत्वमविहतमिति 'शीङस्सार्वधातुके' इति गुणसिद्धिः ॥

शिश्ये शिश्याते शिश्यिषे शिश्यिध्वे शिश्यिढ्वे शिश्ये शिश्यिवहे—'एरनेकाचः' इति यण् । अत्र यद्वक्तव्यं तत् 'ई गतौ'* इत्यत्रोक्तं । ध्वामि 'विभाषेटः' ॥

शयिता । शयिष्यते । शेतां शयातां शेरतां शेष्व शेध्वं शयै शयावहै ॥

अशेत अशयातां अशेरत अशेथाः अशयि अशेवहि ॥

शयीत शयीथाः शयीय । आशिषि, शयिषीष्ट शयिषीष्ठाः शयिषीध्वं, शयिषीढ्वम् शयिषीय ॥

अशयिष्ट अशयिष्ठाः अशयिध्वं अशयिढ्वं अशयिषि ॥

शिशयिषते ॥

शाशय्यते—'अयङ्यिक्ङिति' इति शीङो यकारादौ क्ङिति अयङ्, सच ङित्वादन्त्यस्य । परत्वादस्मिन्कृते द्विर्वचनम् ॥

शेशयीति । शेशेति शेशीतः शेश्यति—शीङ इति सानुबन्धकनिर्देशान्न गुणः, नापि रुट् , व्यतिशेश्यत इति । पिद्वचनेषु तु 'सार्वधातुकार्धधातुकयोः' इति गुणः । शेशीयते भवता इत्यत्र भावे लकारे यकि 'शीङः' इति सानुबन्धकनिर्देशादयङ् न भवति ॥

---

* ख—तादि......हरि......तौ [तदिटि किटि गतौ ?]

शाययति देवदत्तम् । अशीशयत्—'अणावकर्मकात्' इति चित्तवत्कर्तृकत्वे नित्यं परस्मैपदम् । अन्यदा तूभयम् । अकर्मकत्वात्प्रयोज्यस्य कर्मत्वम् ॥

ग्रामोधिशय्यते—'अधिशीङ्स्थासाम्' इत्याधारस्य कर्मत्वात्तत्र लकारः । यकारादित्वादयङादेशः ॥

भावे, शय्यते देवदत्तेन । कालभावाध्वगन्तव्यदेशेषु कर्मसु आसिवत् भावे कर्मणि च लादयो भवन्ति । शय्यते मासं देवदत्तेन, शय्यते मासो देवदत्तेन इत्यादि । अस्योपपादनं भवतावनुगन्तव्यम् । स्यादिषु चिण्वदिटि शायिष्यते इत्याद्युदाहार्यम् । तदभावे कर्तृवद्रूपम् । कर्मकर्तर्यप्येवम् । लुङ्येकवचने 'अचः कर्मकर्तरि' इति चिण्सिचौ । सिचः पक्षे 'चिण्वदिट्च' इति त्रैरूप्यं, अत्यशायि अत्यशयिष्ट अत्यशायिष्ट इति ॥

विशयी देशविशेषः—'विशयी देशे' इति ग्रहादिपाठाण्णिनिः वृद्ध्यभावश्च ॥

खे शयः खशयः—'अधिकरणे शेतेः' इत्यच् । 'शयवासवासिष्वकालात्' इत्यकालवाचिनः पूर्वपदात्सप्तम्या वाऽलुक् । कालवाचित्वे तु पूर्वाह्णशयः इति लुगेव ॥

पार्श्वाभ्यां शेते पार्श्वशयः । उरसा शेते उरश्शयः—'पार्श्वादिषूपसङ्ख्यानम्' इत्यच् ॥

उत्तानश्शेते उत्तानशयः । एवं ऊर्ध्वशयः — 'उत्तानादिषु कर्तृषु' इत्यच् ॥

दिग्धेन सह शेते दिग्धसहशयः — 'दिग्धसहपूर्वाच्च' इत्यच् । दिग्धसहयोर्मयूरव्यंसकादित्वात् अस्मादेव निर्देशाद्वा तत्पुरुषः । तेन शयशब्दस्य उपपदसमासः । सप्तमीनिर्देशाभावेऽप्युपपदाधिकारे विधानात्, 'सुपि' इत्यनुवर्तनाद्वा उपपदत्वं दिग्धसहशब्दस्याविरुद्धम् । न्यासेऽप्युक्तं उपपदसमास इति ॥

गिरिशः — 'गिरौडश्छन्दसि' इति डे टिलोपः । "संज्ञाशब्दत्वाद्भाषायामप्ययं प्रयुज्यते तुराषाडिति च" इत्यात्रेयः । हरदत्तस्तु "लोमादिलक्षणेन शप्रत्ययेन भाषायामपि गिरिश इति भवति" इति । भाष्येपीदं वचनं प्रत्याख्यातं 'तद्धितो वा' इति ॥

शयालुः 'आलुचि शीङो ग्रहणम्' इत्यालुच् ॥

शयितः— 'मतिबुद्धि' इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वात् वर्तमाने क्तः । अतिशयितो गुरुं शिष्यः, अतिशयितो गुरुश्शिष्येण — 'गत्यर्थाकर्मकश्लिषशीङ्' इति कर्तृकर्मणोः क्तः । उपसर्गवशात्सकर्मकोयम् । तदर्थ एव हि पाठः । सेटो निष्ठायां 'निष्ठाशीङ्' इति कित्त्वनिषेधाद्गुणः । सानुबन्धकनिर्देशाद्यङ्लुकि किच्चमेवेति शेश्यत इति, 'एरनेकाच' इति यण्भवति ॥

तत्र विशायः 'तवोपशायः' शयनं तव प्राप्तावसरमित्यर्थः— 'व्युपयोश्शेतेः पर्याये' इति घञ् । पर्यायादन्यत्र उपशयः इत्यच् । पूर्वसूत्रात् 'अनुपात्यये' इत्यनुवृत्त्यैव पर्यायत्वे सिद्धे पुनः पर्यायग्रहणात् 'अभिविधौ भाव इनुण्' इति परमपीनुणं बाधित्वाभिविधावपि घञेव भवति उपशयो वर्तत इति । अभिविधिरभिव्याप्तिः । पर्यायशयनं सार्वत्रिकमित्यर्थः ॥

शेरते अस्मिन्नङ्गुळय इति शयः—'पुंसि संज्ञायाम्' इति घः ॥

शय्या—'संज्ञायां समज' इत्याधिकरणे स्त्रियां क्यप् ॥

शयनीयं—बाहुळकादधिकरणेनीयर् ॥

सुखशयनं पृच्छति सौखशायनिकः—'पृच्छतौ सुस्नातादिभ्यः' इति ठक् । अतिशये भवः आतिशायिकः—अध्यात्मादित्वाट्ठञ् । अनुशतिकादित्वादुभयोरुदाहरणयोः उभयपदवृद्धिः । 'व्याप्तमातिशायिकेन रसेन' इति माघप्रयोगश्चिन्त्यः ॥

अतिशायनं—ल्युट्, 'अतिशायने' इति निपातनाद्दीर्घः । 'अबाधकान्यपि निपातनानि' इत्यतिशयनमित्यपि भवति ॥

संशयमापन्नस्सांशयिकोर्थः—'संशयमापन्नः' इति ठञ् । अत्र यद्यपि कर्मवत्कर्तुरपि संशयमापन्नत्वमस्ति, तथापि संशयादिति पञ्चम्या निर्देष्टव्ये प्रकरणसिद्धायामपि

द्वितीयायां संशयमितिशब्देन पुनरुपादानं कर्मणोऽत्र प्राधान्यख्यापनार्थमिति तत्रैवायं प्रत्ययः । 'पूज्यः प्रतीक्ष्यस्सांशयिकस्संशयापन्नमानसः' इति वदन्नैघण्टुकस्तु सूत्रं साधारणं मन्यते । एतदात्रेयन्यासकारपदमञ्जरीकारादयो न सहन्ते ॥

शोभनश्शयोऽस्यास्सुशयिका—कपि ह्रस्वे 'प्रत्ययस्थात्' इतीत्वम् । 'उदीचामातस्स्थाने' इति निषेधस्तु न भवति, 'यकपूर्वत्वे धात्वन्तयोः प्रतिषेधः' इति ॥

शयुः अजगरः—'भृमृशी' इत्युप्रत्ययः ॥

शयानकः स एव—'आनकन्शीङ्भियः' इत्यानकन् ॥

शेवा लिङ्गाकृतिः—'शेवायह्व' इति वन्नन्तो निपात्यते ॥

शेवं सुखं—'इण्शीङ्भ्यां वन्' इति वन् ॥

शीधुः शीलं शैवालं शैवलं—'शीङो धुग्लग्वालञ्वलञः' इति धुग्लग्वालञ्वलञ् इति प्रत्ययाः । अपरे 'शीङः स्थुक्' इति पठन्तः प्रत्ययं द्वितीयादिं मन्यन्ते । 'शीङो धुक्' इत्येव सूत्रम् । अन्ये तु ऊहितास्सह पठ्यन्ते । यदाहुरात्रेयादयः 'बाहुळकाद्वालञ्वलञौ' इति । शीलशब्दश्शीलतेर्वा ॥

शेवलं—बाहुळकाद्वलन् ॥

शेपः, शेपसी—'वृञ्शीङ्भ्यां रूपस्वाङ्गयोः पुट्च' इत्यसुन्पुडागमश्च' यथासङ्ख्यं रूपे स्वाङ्गे च । अका-

रान्तस्तु शेपशब्दः पप्रत्यये । उक्तं च कैयटपदमञ्जर्योः 'अकारान्तोपि शेपशब्दोस्ति' इति । तथा च वार्तिकमपि पठ्यते 'शुनश्शेपपुच्छलाङ्गूलेषु' इति ॥

शिखा—'शीङो निद्धूस्वश्च' इति खप्रत्ययो नित् ह्रस्वश्च धातोः ॥

शिखावलो मयूरः—'दन्तशिखात्संज्ञायाम्' इति मत्वर्थीयो वलच् ॥

शिखी—'व्रीह्यादिभ्यश्च' इतीनिः ॥

शिखावलं नगरं—'शिखाया वलच्' इति चातुरर्थिको वलच् ॥

शिनिः क्षत्रियविशेषः—'निप्रत्यये ह्रस्वः' इति 'कार्तकौजप' इत्यत्र न्यासे व्युत्पादितम् ॥

आत्मनेपदिनावुदात्तौ ॥

## यु मिश्रणे ॥ २४ ॥

एतदादयस्स्तौत्यन्ता उदात्ता उदात्तेतः ॥

यौति युतः युवन्ति यौषि यौमि—'उतो वृद्धिर्लुकि हलि' इति हलादौ पिति सार्वधातुके वृद्धिः । अजादौ क्ङित्युवङ् ॥

युयाव युयुवतुः युयविथ युयुव युयाव युयव युयुविव—'श्र्युकः किति' इतीण्णिषेधः क्रादिनियमेन बाध्यत इत्युक्तम् ॥

यविता । यविष्यति ॥

यौतु युतात् युतां युवन्तु युहि — हेरपित्त्वान्न गुणो नापि वृद्धिः । यवानि यवाव — आटि पित्त्वेऽप्यहलादित्वान्न वृद्धिः ॥

अयौत् अयुतां अयुवन् अयौः अयवम् ॥

युयात् युयातां युयुः युयाः युयातं युयात युयां युयाव — पिद्वचनेषु यासुटो ङित्त्वेन 'पिच्च ङिन्न भवति' इति पित्त्वाभावान्न वृद्धिः नापि गुणः । आशिषि, यूयात् यूयास्ताम्— 'अकृत्सार्वधातुकयोः' इति दीर्घः ॥

अयावीत् अयाविष्टां अयावीः अयाविषं — सिचि वृद्धिः ॥

यियविषति — 'सनीवन्त' इत्यादिना सनो वेडागमः । गुणावौ । अनयोः 'द्विर्वचनेऽचि' इति स्थानिवद्भावा-द्युशब्दो द्विरुच्यते । 'ओः पुयण्ज्ि' इतीत्वम् । इडभावे, युयूषति — 'इको झल्' इति सनः कित्त्वान्न गुणः । 'अज्झनगमाम्' इति दीर्घः ॥

योयूयते । योयवीति योयोति — 'उतो वृद्धिः' इत्यत्र 'नाभ्यस्तस्य' इत्यनुवृत्तेर्न वृद्धिः ॥

यावयति । अयीयवत् — णौ कृतस्य स्थानिवद्भावेन युशब्दस्य द्विर्वचने 'ओः पुयण्ज्ि' इतीत्वे 'दीर्घो लघोः' इति दीर्घः ॥

कर्मणि, यूयते । यूयतां । अयूयत । यूयेत — यकि 'अकृत्सार्वधातुकयोः' इति दीर्घः । स्यादिषु चिण्वदिट्पक्षे, याविष्यते । अयाविषातां । याविषीष्ट । याविता । अन्यदा यविष्यते । अयविषातां । यविषीष्ट । यविता इत्यादि । लुङ्लिङोर्ध्वमि मूर्धन्यविकल्पनाच्चातूरूप्यम् । लुङेकवचने 'अचः कर्मकर्तरि' इति पक्षे सिच् । तस्य च 'वा चिण्वदिट्च' इति अयावि अयाविष्ट अयविष्ट इति त्रैरूप्यम् ॥

याव्यम् — 'आ सुयुवपिरपिलपित्रपिचमश्च' इति ण्यत् । वृद्धौ 'धातोस्तन्निमित्तस्यैव' इत्यावादेशः । यव्यमिति युनातेर्यति । सानुबन्धकत्वादिह नास्यग्रहणमिति न्यासे ॥

योत्रम् — 'दाम्नी' इत्यादिना ष्ट्रन् ॥

संयावः — 'समि युद्रुदुवः' इति घञ् । समोऽन्यत्र प्रयवः — 'ऋदोरप्' ॥

उद्यावः — 'उदि श्रयतियौति' इति घञ् । यौतीति निर्देशात् युनातेरुद्यव इति । उद्यावो भक्ष्यविशेषः 'अध्यायन्यायोद्याव' इति संज्ञायां करणाधिकरणयोर्घञि निपात्यते ॥

यूतिः — 'ऊतियूति' इति क्तिनि दीर्घत्वमन्तोदात्तत्वं च निपात्यते । ग्रहयुतिरित्येतत्तु युनातेः । यूतीति निपातनं यौतेरेवेति वृत्तिन्यासयोः ॥

यौत्यत्र रसादिकमिति यवः — 'पुंसि संज्ञायाम्' इति घः ॥

यवनः — नन्द्यादित्वाल्ल्युः ॥

दुष्टो यवो यवानी । यवनानां लिपिः यवनानी — 'इन्द्रवरुण' इत्यादिना ङीषानुकौ । तत्र 'यवाद्दोषे' 'यवनाल्लिप्याम्' इत्युक्तम् । 'यवनीमुखपद्मानाम्' इति प्रयोगः पुंयोगलक्षणे ङीषि ॥

यवानां भवनं क्षेत्रं यव्यं, यवक्यम् — 'यवयवकषष्टिकाद्यत्' इति यत् ॥

यव एव यवकः । यवस्य विकारो यावः स च यावकः — 'यावादिभ्यः कन्' इति कन् । रञ्जनद्रव्ये यावकमिति संज्ञायां ण्वुल् ॥

यवमान् — 'मादुपधायाश्च' इति वत्वं 'अयवादिभ्यः' इति निषेधान्न भवति ॥

युत्वा । युतः — 'श्र्युकः किति' इतीण्णिषेधः । युतमित्यत्र 'यस्य विभाषा' इति वाऽनिट्त्वम् ॥

यूपः — 'कुयुभ्यां च' इति पप्रत्ययो दीर्घश्च ॥

यूका — 'अजियुधूनीभ्यो दीर्घश्च' इति कनि दीर्घः ॥

यवसम् — 'ऋतन्यञ्जि' इत्यादिना सप्रत्ययः । यवासः— 'अन्येषामपि दृश्यते' इति दीर्घः ॥

युवा – 'कनिन्युवृषितक्षि' इत्यादिना कनिन् । भसंज्ञायां 'श्वयुवमघोनामतद्धिते' इति सम्प्रसारणे यून इत्यादि । 'न सम्प्रसारणे सम्प्रसारणम्' इति पूर्वस्य सम्प्रसारणनिषेधः ॥

यूनो भावकर्मणी यौवनं यौवनिका – 'हायनान्तयुवादिभ्योऽण्' 'द्वन्द्वमनोज्ञादिभ्यश्च' इत्यण्वुञौ । स्वभावाद्वुञन्तस्त्री*विषयः । 'श्वयुव' इति सम्प्रसारणं 'अतद्धिते' इति निषेधान्न भवति । 'नस्तद्धिते' इति टिलोपोपि न भवति । 'अन्' 'प्रकृत्याऽके राजन्यमनुष्ययुवानः' इति चाण्वुञोः प्रकृतिभावात् ॥

यविष्ठः यवीयान् – 'स्थूलदूर' इत्यादिना इष्ठेयसुनोः यणादिपरलोपे पूर्वस्य च गुणः ॥

कनिष्ठः कनीयान् – 'युवाल्पयोः कनन्यतरस्याम्' इति वा कनादेशे 'प्रकृत्यैकाच्' इति प्रकृतिभावः ॥

यवयति कनयति – 'णाविष्ठवत्' इति यणादिलोपगुणौ । युवाल्पयोः कनादेशश्च पक्षे । भाष्यकारप्रयोगाद्वृद्ध्यभावः ॥

स्त्रियां 'यूनस्तिः' इति तिप्रत्यये युवतिः – 'सर्वतोऽक्तिन्नर्थादित्येके' इति ङीषि युवतीति । युवतीः पश्येत्यादौ लिङ्गविशिष्टपरिभाषया 'श्वयुव' इति सम्प्रसारणं न

*ख—...ञ् स्त्री.

भवति, 'श्वादीनां प्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थम्' इत्युक्तत्वात्। तिप्रत्यये यूनः पदत्वान्नलोपः॥

युवतीनां समूहो यौवनं* — 'भिक्षादिभ्योऽण्' इत्यण्। युवत्या भावकर्मणी यौवनं यौवनिका — लिङ्गविशिष्टपरिभाषया 'हायनान्त' इत्यण्, मनोज्ञादित्वाद्वुञ्च। 'भस्याढे तद्धिते' इति पुंवद्भावः सर्वत्र। 'भिक्षादिषु युवतिशब्दस्य पाठसामर्थ्यात्पुंवद्भावो न' इति वृत्तौ। सामर्थ्यं च यदि स्यात्पुंवद्भावः 'भस्याढे तद्धिते† पुंवद्भावः' 'सिद्धश्च प्रत्ययविधौ' इति प्रत्यये भाविनि पूर्वमेव पुंवद्भावविधानात् युवशब्दस्य च कनिनन्तत्वेनाद्युदात्तत्वात् 'तस्य समूहः' इत्येवाणि सिद्धे पुनः पाठः। पुंवद्भावे तु युवतिशब्दस्य प्रत्ययस्वरेणान्तोदात्तत्वात् अनुदात्तादित्वात् 'अनुदात्तादेः' इत्यञो बाधनार्थः पाठो युज्यते। यथा तु वार्तिकं तथा पुंवद्भाव इष्यते। यदाह 'भिक्षादिषु युवतिग्रहणानर्थक्यं पुंवद्भावस्य सिद्धत्वात्प्रत्ययविधौ' इति॥

युवखलतिः, युवा खलतिः, युवतिः खलतिः — 'युवा खलतिपलितवलिनजरतीभिः' इति विशेषणसमासः। लिङ्गविशिष्टपरिभाषया युवतिशब्दस्य ग्रहणम्। तस्य 'पुंवत्कर्मधारय' इति पुंवत्त्वम्। एवं युवपलितेत्यादि। जरतीशब्देन स्त्रीलिङ्गेन युवशब्दस्य सामानाधिकरण्यानौचित्या-

*क—यौवतं.

†क—...ते इति.

युवतिशब्दस्य समासः । युवजरन् इत्येतत्तु जराद्भिरिति पाठादिनि व्याख्यातारः । स्त्रीलिङ्गपाठस्तु लिङ्गविशिष्टपरिभाषायाः ज्ञापनार्थः ॥

इभयुवतिः – 'पोटायुवति' इत्यादिना विशेषणसमासः ॥

आर्ययुवानौ – अत्र 'प्रातिपदिकान्त' इति णत्वं 'युवादीनां प्रतिषेधः' इति निषिध्यते । आर्ययून इत्यादौ च 'प्रातिपदिकान्त' इति 'एकाजुत्तरपदे' इति च णत्वं 'युवादीनां प्रतिषेधः' इत्येव निषिध्यते ॥

अयममिश्रणार्थोऽपि । तथा च दृश्यते 'अयुतसिद्धानामाधार्याधारभूतानाम्' इति । युञ् बन्धने इति क्र्यादौ । यु जुगुप्सायां इत्याकुस्मीयः ॥

## रु शब्दे ॥२५॥

रौतीत्यादि यौतिवत् । विशेषस्तु 'तुरुस्तुशम्यमस्सार्वधातुके' इति हलादौ सार्वधातुके पक्षे ईडागमश्शब्विषये रवीति रुवीत इत्यादि । अशब्विषये तु सार्वधातुकस्य विकरणेन व्यवधानादीटोऽप्रसङ्गः ॥

रुरूषति – 'सनि ग्रहगुहोश्च' इत्यनिट्त्वम् ॥

रोरूयते । रोरवीति । रोरोति । रोरुतः । रोरुवीतः – प्रकृतिग्रहणन्यायेन 'तुरुस्तु' इतीटो विकल्पः ॥

रवणः – 'चलनशब्दार्थात्' इति युच् ॥

संरावः — ‘ उपसर्गे रुवः ’ इति घञ् । ‘ प्राणा उपरवाः ’ इति प्रयोगः ‘ पुंसि संज्ञायाम् ’ घे द्रष्टव्यः । उपसर्ग इति वचनात् अनुपसृष्टादपि रवः । बाहुळकाद्घञपीत्यात्रेयः रावः इति ॥

आरावः आरवः — ‘ विभाषाऽऽङि रुप्लुवोः ’ इति पक्षे घञ् । तदभावेऽप् ॥

रविः — ‘ अच इः ’ इतीप्रत्ययः ॥

‘ तुरुस्तुशम् ’ इत्यत्र वृत्तौ ‘ तु इति सौत्रो धातुः ’ इति । अत्र न्यासे ‘ वृद्ध्यर्थ इत्येके । हिंसार्थ इत्यपरे । तस्य च लुग्विकरणित्वं स्मर्यते ’ इति । वर्धमानश्च — ‘ तु वृद्धिहिंसयोरदादौ स्मर्यते ’ इति । हरदत्तस्तु — वृद्ध्यर्थत्वमभिधाय ‘ गत्यर्थ इत्येके । हिंसार्थ इत्यपरे ’ इति । त्रिष्वपीति बोधिन्यासे । “ उत्तवीतीति ‘ बहुळं छन्दसि ’ इति शपो लुक् ” इति पदमञ्जर्यां यद्दृश्यते तद्दुर्विन्यस्तकाकु [क] पदजनितभ्रान्तिभिः लेखकैरिहापि शम्यमोर्वक्ष्यमाणं लिखितमिति बोद्धव्यम् । न तु तत्प्रामाण्यादयं न्याय्यविकरण इति । न्याय्यविकरणत्वे हि न्यासादिविरोधस्स्यात् । किञ्च, ‘ शम्यमोश्छन्दसि विकरणस्य च लुकि कृते हलादिसार्वधातुकमनन्तरं सम्भवति ’ इति वृत्तिविरोधस्स्यात् ॥

तौतीत्यादि रौतिवदुदाहार्यम् ॥

‘ उतां च रुस्नुवौ क्षुवं तथोर्णोति मथोयुणुक्ष्णुवः । ’

इत्यत्र सेट्प्रकरणेऽस्यापाठादनिट्त्वम् । तोता । तोष्यति इत्यादि ॥

थलि क्रादिनियमादिड्विकल्पः तुतोथ तुतविथ इति ॥

तुतावयिषति । अतूतवदित्यत्र अभ्यासस्य पुयण्जपरत्वाभावात् इत्वं न भवति ॥

आपिशलास्तु—'तुरुस्तुशम्यमस्सार्वधातुके छन्दसि' इति पठन्तः सर्वत्रेदं छान्दसमाहुः । रवत इति गतिरेषणयोऽशपि ॥

## णु स्तुतौ ॥ २६ ॥

नौतीत्यादि यौतिवत् ॥

नुनावयिषति । अनूनवत् इत्यत्र पुयण्जपरत्वाभावात् अभ्यासस्य नेत्वम् ॥

नुनूषति—'सनि ग्रहगुहोश्च' इत्यनिट्त्वे* 'इको झल्' इति सनः कित्वे 'अज्झन' इति दीर्घः ॥

प्रणौति—'उपसर्गादसमासेपि' इति णत्वम् । प्रणुनाव इत्यादौ 'उभौ साभ्यासस्य' इति साभ्यासस्यानिनेर्णत्वविधानात् ज्ञापकात् णत्वात्पूर्वमेव द्विर्वचनमिति परस्य णत्वं न भवति, व्यवधानात् । न च णत्वस्य द्विर्वचने पूर्वत्रासिद्धत्वेन णत्वं न भविष्यतीति वाच्यम् । 'पूर्वत्रासिद्धीय-

*क—इति नित्यानिट्त्वे.

मद्विर्वचने ' इत्युक्तत्वादित्यात्रेयः । हरदत्तस्तु 'उभौ साभ्यासस्य ' इत्यनेन 'पूर्वत्रासिद्धमद्विर्वचने ' इत्यस्यानित्यत्वं ज्ञाप्यत इति णत्वस्यासिद्धत्वात् नुशब्दस्य द्विर्वचने परस्य व्यवधानादणत्वमाह ॥

आनुते सृगालः – 'आङि नुप्रच्छयोरुपसङ्ख्यानम् ' इति तङ् । आङ्पूर्वोयं स्वभावात् उत्कण्ठापूर्वके शब्दने वर्तते । तदुक्तं न्यासे 'अयं धातुरुत्कण्ठापूर्वके शब्दने वर्तते ' इति । कैयटपदमञ्जर्योरप्युदाहरणस्य सोत्कण्ठं शब्दं करोतीत्यर्थ उक्तः ॥

आनुवाते आनुवते आनुषे आनुवे आनुवहे ॥

आनुनुवे आनुनुविषे आनुनुविध्वे आनुनुविढ्वे आनुनुवहे । आनविता । आनविष्यते । आनुतां आनुष्व आनवै । आनुत आनुथाः आनुवि । आनुवीत आनुवीथाः आनुवीय । आशिषि, आनविषीष्ट आनविष्ट आनविष्ठाः आनविषि । आनुनूषते ॥

यङ्लुक्यप्ययं तङ्वति आनोनुत इति । दीर्घान्तोयं
भ
तुदादौ ॥

## टु क्षु शब्दे ॥ २७ ॥

क्षौति । चुक्षाव । क्षवितेत्यादि यौतिवत् ॥

विक्षावः – 'वौ क्षुश्रुवः ' इति घञ् ॥

क्षवथुः — ' ट्वितोऽथुच् ' ॥

क्षुमा, अतसी — ' अर्तिस्तु ' इत्यादिना मन्, बाहुळकादगुणत्वम् ॥

क्षुरः — ' ऋज्र ' इत्यादिना रन् ॥

## क्ष्णु तेजने ॥ २८ ॥

क्ष्णौति । चुक्ष्णाव चुक्ष्णुवतुः चुक्ष्णुवुः । क्ष्णविता इत्यादि यौतिवत् ॥

संक्ष्णुते शस्त्रम् । संचुक्ष्णुवे । संक्ष्णविता । संक्ष्णविष्यते । संक्ष्णुताम् । समक्ष्णुत । संक्ष्णुवीत । संक्ष्णुविषीष्ट । समक्ष्णविष्ट । संचुक्ष्णूषते — ' समः क्ष्णुवः ' इति तङ् ॥

## ष्णु प्रस्रवणे ॥ २९ ॥

स्नौति । सुष्णाव । स्नविता । स्नविष्यति । स्नौतु । अस्नौत् । स्नुयात् । स्नूयात् । अस्नावीत् ॥

सुस्नूषति — ' स्तौतिण्योरेव ' इति न षत्वम् ॥

सोष्णूयते । सोष्णोति ॥

स्नावयति । असुष्णवत् ॥

कर्मणि, स्नूयते । सुष्णुवे सुष्णुषे सुष्णुध्वे सुष्णुवहे । स्नोता । स्नोष्यते । स्नूयताम् । अस्नूयत । स्नूयेत । स्नोषीष्ट ।

अस्नावि अस्नोषातामित्यादि । 'स्नुक्रमोरनात्मनेपदनिमित्ते' इत्यात्मनेपदेन समानपदस्थस्य स्नुक्रमिभ्यां परस्य वलादेरार्धधातुकस्येण्णिषेधः । प्रस्नवितेवाचरति प्रस्नवित्रीयते इत्यात्मनेपदेन समानपदस्थत्वेपि निषेधादन्तरङ्गत्वात्प्रागेवेडागमः प्रवर्तत इति पदमञ्जर्यादौ स्थापितम् । अस्माभिरपि हि क्रमतावेवं प्रतिपादितम् । स्यादिषु पक्षे चिण्वदिटि स्नाविष्यत इत्याद्युदाहार्यम् ॥

कर्मकर्तरि तु 'न दुहस्नुनमां यक्चिणौ' इति यक्चिणौ न भवतः । प्रस्नुते गौस्स्वयमेव । प्रस्नुता गौस्स्वयमेव । प्रास्नुत गौस्स्वयमेव । प्रस्नुवीत गौस्स्वयमेव । प्रास्नोष्ट गौस्स्वयमेव । ननु 'कर्मवत्' इत्यतिदेशेन प्राप्ते 'चिण्भावकर्मणोः' इति चिणि 'न दुहस्नुनमाम्' इति प्रतिषिद्धेपि, 'अचः कर्मकर्तरि' इति वैकल्पिकश्चिण् पक्षे कस्मान्न भविष्यति । न चैवं सति स्नुग्रहणमनर्थकं स्यादिति वाच्यम् । तस्य यङ्निषेधार्थत्वेनाप्युपपत्तेः । नैष दोषः, कर्मवदित्यतिदेशेन नित्यं प्राप्तस्य चिणः स विकल्पः । अस्य तु 'न दुहस्नुनमाम्' इति चिणोतिदेश एव निषिध्यते । तथा च वृत्तिः 'प्राप्तविभाषेयम्' इति । न चोभयत्रविभाषाश्रयणेन चिणः* प्रसङ्गः । आश्रीयमाणेप्युभयत्रविभाषात्वे यतः परत्वात् 'न दुहस्नुनमाम्' इति निषेध एव भविष्यति । अत्रात्रेयः "'न दुहस्नुनमाम्' इति चिण्व-

* क–...यणे चिणः.

माणव्यम् — ब्राह्मणादित्वात् ष्यञ् ॥

मुनिः — 'मनेरुच्चोपधायाः' इतीन्प्रत्ययः, उपधायाश्चोकारः॥

मौनम् — 'इगन्ताच्च' इति भावेऽण् ॥

मनु अवबोधन इति तनादौ ॥

## युज समाधौ ॥ ६९ ॥

समाधिश्चित्तनिरोधः । तेनायमकर्मकः । युज्यत एतत् इति प्रयोगस्तु युनक्तेः कर्मणि यकि ताङि । युज्यते ब्रह्मचारी योगमित्येतदपि 'सृजियुज्योश्श्यं स्तु' इति सकर्मकस्य कर्तुः कर्मवद्भावश्यन्नोर्विधानाद्युज्यते । युज्यतिसृज्यत्योरकर्मकत्व एव वार्तिकं चोपपद्यते । युज्यत इत्यादि पूर्ववत् ॥

प्रयुक् — 'सत्सूद्विष' इत्यादिना सोपपदात्क्विप् । 'युजमापन्ना महर्षयः' इत्यत्र निरुपपदत्वेपि सम्पदादित्वाद्भावे क्विप् । 'युजेरसमासे' इति सर्वनामस्थाने नुमस्य न भवति, इकारवतो रौधादिकस्यैव तत्र निर्देशात् ॥

योगी — सम्पृचादिना घिनुण् ॥

'युग्यं च पत्रे' इति निपातनं नास्य, अर्थस्वभावात् । 'दाम्नीशसयुज' इति ष्ट्रन्विधावपि नास्य ग्रहः, अनभिधानात् ॥

## सृज विसर्गे ॥ ७० ॥

प्रयुज्यते च –

'वृन्तश्लथं हरति पुष्पमनोकहानां संमृज्यते सरसिजै-रुणांशुभिन्नैः ॥'

इति । कर्मणिप्रयोगे तु प्रक्रमभङ्गस्स्यात् ।

'स्वाभाविकं परगुणेन विभातवायुस्सौरभ्यमीप्सुरिव ते मुखमारुतस्य ।' इति च न सङ्गच्छते । पाणिभ्यां सृज्यते पाणिसर्ग्येत्यादयस्तु सृजतेः कर्मणि । सृज्यते मालामिति कर्तरि ॥

सृज्यते । ससृजे, ससृजिषे — क्रादिनियमान्नित्यमिट् । 'विभाषा सृजिदृशोः' इति विकल्पोस्य न भवति, थलोऽभावात् ॥

स्रष्टा । स्रक्ष्यते । सृज्यताम् । असृज्यत । सृज्येत सृक्षीष्ट, लिङौ । असृष्ट असृक्षाताम् । सिसृक्षते — झलादौ व्रश्चादिना षत्वे 'षढोः कस्सि' इति कत्वम् । अकिति झलादौ 'सृजिदृशोः' इत्यादिना अमागमः । 'हलन्ताच्च' इति 'लिङ्सिचावात्मनेपदेषु' इति सनो लिङ्सिचोश्च किच्वात् नामागमो, नापि गुणः ॥

सरीसृज्यते । सरीसर्ष्टि ॥

सर्जयति । असीसृजत् । अससर्जत् — उदृत्वा ॥

## लिश अल्पीभावे ॥ ७१ ॥

लिश्यते । लिलिशे । लेष्टा । लेक्ष्यते — व्रश्चादिना षत्वे कत्वम् ॥

माणव्यम् — ब्राह्मणादित्वात् ष्यञ् ॥

मुनिः — 'मनेरुच्चोपधायाः' इतीन्प्रत्ययः, उपधायाश्चोकारः॥

मौनम् — 'इगन्ताच्च' इति भावेऽण् ॥

मनु अवबोधन इति तनादौ ॥

## युज समाधौ ॥ ६९ ॥

समाधिश्चित्तनिरोधः । तेनायमकर्मकः । युज्यत एतत् इति प्रयोगस्तु युनक्तेः कर्मणि यकि तङि । युज्यते ब्रह्मचारी योगमित्येतदपि 'सृजिमृज्योश्श्यं स्तु' इति सकर्मकस्य कर्तुः कर्मवद्भावश्यनोर्विधानाद्युज्यते । युज्यतिसृज्यत्योरकर्मकत्व एव वार्तिकं चोपपद्यते । युज्यत इत्यादि पूर्ववत् ॥

प्रयुक् —'सत्सूद्विष' इत्यादिना सोपपदात्क्विप् । 'युजमापन्ना महर्षयः' इत्यत्र निरुपपदत्वेपि सम्पदादित्वाद्भावे क्विप् । 'युजेरसमासे' इति सर्वनामस्थाने नुमस्य न भवति, इकारवतो रौधाधिकस्यैव तत्र निर्देशात् ॥

योगी — सम्पृचादिना घिनुण् ॥

'युग्यं च पत्रे' इति निपातनं नास्य, अर्थस्वभावात् । 'दाम्नीशसयुज' इति ष्ट्रन्विधावपि नास्य ग्रहः, अनभिधानात् ॥

## सृज विसर्गे ॥ ७० ॥

प्रयुज्यते च –

'वृन्तश्लथं हरति पुष्पमनोकहानां संमृज्यते सरसिजै-
ररुणांशुभिन्नैः ॥'

इति । कर्मणिप्रयोगे तु प्रक्रमभङ्गस्स्यात् ।

'स्वाभाविकं परगुणेन विभातवायुस्सौरभ्यमीप्सुरिव ते मुखमारुतस्य ।' इति च न सङ्गच्छते । पाणिभ्यां सृज्यते पाणिसर्ग्येत्यादयस्तु सृजतेः कर्मणि । सृज्यते मालामिति कर्तरि॥

सृज्यते । ससृजे, ससृजिषे — क्रादिनियमान्नित्यमिट् । 'विभाषा सृजिदृशोः' इति विकल्पोस्य न भवति, थलोऽभावात् ॥

स्रष्टा । स्रक्ष्यते । सृज्यताम् । असृज्यत । सृज्येत सृक्षीष्ट, लिङौ । असृष्ट असृक्षाताम् । सिसृक्षते — झलादौ व्रश्चादिना षत्वे 'षढोः कस्सि' इति कत्वम् । अकिति झलादौ 'सृजिदृशोः' इत्यादिना अमागमः । 'हलन्ताच्च' इति 'लिङ्सिचावात्मनेपदेषु' इति सनो लिङ्सिचोश्च कित्त्वात् नागमो, नापि गुणः ॥

सरीसृज्यते । सरीसृष्टि ॥

सर्जयति । असीसृजत् । अससर्जत् — उदृद्वा ॥

## लिश अल्पीभावे ॥ ७१ ॥

लिश्यते । लिलिशे । लेष्टा । लेक्ष्यते — व्रश्चादिना षत्वे कत्वम् ॥

लिश्यताम् । अलिश्यत । लिश्येत, लिक्षीष्ट । अलिक्षत, अलिक्षाताम् – 'शल इगुपधात्' इति क्सः । अजादौ 'क्सस्याचि' इत्यकारलोपः ॥

लिलिक्षते ॥

लेलिश्यते । लेलेष्टि ॥

लेशयति । अलीलिशत् ॥

लिक्षा – बाहुलकात् क्सप्रत्ययः ॥

अयं गत्यर्थस्तुदादौ । पदाद्योनुदात्ता अनुदात्तेतः अण्यतिवर्जम् ॥

अथानिटः परस्मैपदिन आह –

## राधोकर्मकाद्वृद्धावेव ॥ ७२ ॥

एवकारो भिन्नक्रमः । अस्मादकर्मकादेव श्यन् । वृद्धिग्रहणं तु उदाहरणप्रदर्शनार्थम् यथा वृद्धावकर्मक इति । एवकारश्च एवमर्थात्सिद्धायाः सकर्मकक्रियाव्यावृत्तेः अनुवादमात्रम् । काश्यपस्तु–यथाश्रुतमेवान्वयं वदन् 'अर्थावधारणार्थेनैवकारेण अन्यत्रार्थनिर्देशेष्वनियमो ज्ञाप्यते' इति; तत्कर्मवत्सूत्रभाष्ये राध्यत्योदनस्स्वयमेवेत्यवृद्धौ श्यनो दर्शनादुपेक्ष्यम् । अत्र हि सिद्ध्यतीत्यर्थः । तथा 'राधीक्ष्योः' इत्यत्र वृत्तौ देवदत्ताय राध्यतीति दैवपर्यालोचने श्यनो दर्शनाच्च । अत्र दैवस्य जीवत्यादौ प्राणादिवद्धात्वर्थेन्तर्भावादकर्मकत्वम् । एवं हि माघप्रयोगश्चोपपद्यते–

न दूये सात्वतीसूनुर्यन्मह्यमपराध्यति ।
क्रियासमभिहारेण विराध्यन्तं क्षमेत कः ॥

इत्यत्र हि द्रोहोर्थः ॥

रराध रराधतुः — 'राधो हिंसायाम्' इत्येत्वाभ्यासलोपौ सौवादिकस्य, यतो हिंसार्थस्य सकर्मकत्वात् दैवादिकत्वमेव न भवति ॥

राद्धा । रात्स्यति । राध्यतु । अराध्यत् । राध्येत्, राध्यात्, लिङौ । अरात्सीत् अराद्धां अरात्सुः ॥

रिरात्सति । राराध्यते ॥

राधयति । अरीरधत् ॥

अयं स्वादिश्चुरादिश्च ॥

## व्यध ताडने ॥ ७३ ॥

विध्यति — 'ग्रहिज्या' इत्यादिना सम्प्रसारणम् । तच्च 'न सम्प्रसारणे सम्प्रसारणम्' इति पूर्वस्य न भवति ॥

विव्याध विविधतुः विव्यद्ध विव्यधिथ विविधुः विव्यध विव्याध विविधिव — क्रादिनियमादिट् । थलि भारद्वाजनियमादिड्विकल्पः । पिद्वचनेषु 'लिट्यभ्यासस्य' इत्यभ्यासस्य हलादिशेषं बाधित्वा सम्प्रसारणम् । अन्यत्र ग्रहिज्यादिना सम्प्रसारणे पश्चाद्द्विर्वचनम् ॥

व्यद्धा । व्यत्स्यति । विध्यतु । अविध्यत् । विध्येत्, विध्यात — 'किदाशिषि' इति कित्त्वात्प्रसारणम् ॥

अव्यात्सीत् अव्याद्धाम् ॥

विव्यत्सति — हलादिशेषे इत्वम् ॥

वेविध्यते । वाव्यद्धि । व्याधयति । अविव्यधत् ॥

व्याधः — ' श्याद्व्यध ' इति णः ॥

व्यधः — ' व्यधजपोः ' इत्यप् ॥

मृगावित् —' क्विप्च ' इति क्विप् । ' नहिवृति ' इत्यादिना पूर्वपदस्य दीर्घः ॥

विधुः — ' पृभिदिव्यधि ' इति कुप्रत्ययः ॥

## पुष पुष्टौ ॥ ७४ ॥

पुष्यति । पुपोष पुपोषिथ — क्रादिनियमान्नित्यमिट् । भारद्वाजनियमस्तु उपदेशेजन्तानां अत्वतां चेतीह न भवति ॥

पोष्टा । पोक्ष्यति । पुष्यतु । अपुष्यत् । पुष्येत् , पुष्यात् , लिङौ । अपुपुषत् — ' पुषादि ' इत्यादिनाङ्परस्मैपदे । तङि तु व्यत्यपुक्षतेति क्सो भवति ॥

कर्मणि तु—अपोषि अपुक्षातां अपुक्षत इति चिण्क्सौ भवतः॥

पुपुक्षति । पोपुष्यते । पोपोष्टि । पोषयति अपूपुषत् ॥

पुष्यन्त्यस्मिन्नारब्धानि कार्याणीति पुष्यः — ' पुष्यसिद्ध्यौ नक्षत्रे ' इति क्यप् निपात्यते ॥

पुष्येण युक्तः पौषः — ' नक्षत्रेण युक्तः कालः ' इत्यण् ॥

पौषमहः — ' तिष्यपुष्ययोर्नक्षत्राणि ' इति यलोपः ॥

स्वपोषं पुष्यतीत्यादि पोषतिवन्नेयम् । ' स्वे पुषः ' इति णमुल् ॥

पुषति पोषति इति द्वयं शपि । [पुष्णातीति क्र्यादौ । पोषयतीति चुरादौ ॥ ]

## शुष शोषणे ॥ ७५ ॥

शुष्यतीत्यादि पुषिवत् ॥

शुष्कः, शुष्कवान् — 'शुषः कः' इति निष्ठातस्य ककारः ॥

शुष्कैव शुष्किका, शुष्का जङ्घा अस्याः शुष्कजङ्घा — कत्वस्य पूर्वत्रासिद्धत्वात् 'उदीचामातस्स्थाने' इति ककारपूर्वत्वेन वैकल्पिकः इत्वनिषेधः, 'न कोपधायाः' इति पुंवद्भावनिषेधश्च न भवति ॥

आतपशुष्कः — 'सिद्धशुष्कपक्वबन्धैश्च' इति सप्तमीसमासः ॥

ऊर्ध्वशोषं शुष्यति — 'ऊर्ध्वे शुषिपूरोः' इत्यूर्ध्वे कर्तरि णमुल् । कषादित्वाद्यथाविध्यनुप्रयोगः ॥

## तुष प्रीतौ ॥ ७६ ॥

प्रीतिस्तृप्तिः । तुष्यतीत्यादि ॥

## दुष वैकृत्ये ॥ ७७ ॥

वैकृत्यं विकृतिः । दुष्यतीत्यादि । दोषणं दूषणमिति णौ 'दोषो णौ' इत्यूत्वमुपधायाः । दूषयति चित्तं दोषयति वा — 'वा चित्तविरागे' इत्यूकारविकल्प उपधायाः, विरागश्चित्तस्याप्रीतता ॥

दोषी — सम्पृचादिना घिनुण् ॥

दूषीका — 'कषिदूषिभ्यामीकन्' इतीकन् ॥

## श्लिष आलिङ्गने ॥ ७८ ॥

श्लिष्यति । शिश्लेष । श्लेष्टा । श्लेक्ष्यति । श्लिष्यतु । अश्लिष्यत् । श्लिष्येत्, श्लिष्यात्, लिङौ ॥

अश्लिक्षत् कन्यां देवदत्तः — 'श्लिष आलिङ्गने' इति अङपवादः क्सः । आलिङ्गनं परिष्वङ्गः । अन्यत्र पुषादित्वादङ्, समश्लिषज्जतु काष्ठं (च) इति ॥

अथात्मनेपदेषु कथं भवितव्यम्? समाश्लेषि कन्या देवदत्तेन समाश्लिक्षातां समाश्लिक्षन्त इति । 'शल इगुपधात्' इति क्सो भविष्यति । एकवचने तु परत्वाच्चिण् । यद्येवमनालिङ्गनेपि क्सः प्राप्नोति, इष्यते च सिच् समश्लिक्षत जतूनि काष्ठैः इति । एवं तर्हि 'श्लिषः क्सः' इति योगविभागः । अयं च पुरस्तादपवादन्यायेन अङं बाधते, न च्चिणम् । ततः 'आलिङ्गने' इति द्वितीयः । नियमार्थमिदं वचनम् । अनेन च योगविभागसामर्थ्यात् 'श्लिषः' इति वा, 'शल इगुपधात्' इति वा क्सस्य या प्राप्तिः सा सर्वा नियम्यते आलिङ्गन एवेति । तेन आलिङ्गने परस्मैपदात्मनेपदयोः यथायोगमङ्चिणाविव भवतः ॥

श्लेष्मा — मनिन् ॥

श्लेष्प्रतीति — शप्रि ॥

# शक विभाषितो मर्षणे ॥ ७९ ॥

अयं मर्षणे दिवादिः । विभाषित इत्युभयपदी तन्त्रान्तरप्रसिद्धयोच्यते । क्षीरस्वामी तु—सहनेऽर्थे शकिधातुर्विभाषितः विकल्पितः, पक्षे दिवादिः पक्षे स्वादिरित्यर्थः । शक्यते, शक्नोतीति । शाकटायनश्चामुमेव विभाषितार्थमङ्गीकृत्य अस्य चोभयत्र पाठमात्रादेव सिद्धत्वाद्वैयर्थ्यमेव नूनं मत्वा, 'शक मर्षणे' इत्येव पपाठ । अतस्स्वाम्युक्तमनेनैव प्रत्युक्तम् । शाकटायनोक्तमपि विभाषितपदस्य मैत्रेयादिभिस्तन्त्रान्तरप्रसिद्धार्थस्याभिधानात् सार्थकत्वाद्यत्किञ्चित् । तथा स्वामिशाकटायनपक्षावुक्त्वोक्तं च पुरुषकारे—'तच्चैतदुभयमपि बहुसम्मते यथोक्तेऽर्थे सम्भवत्ययुक्तमेव' इति ॥

शक्यति । शशाक शेकतुः शशक्थ शेकिथ । भारद्वाजनियमादिड्विकल्पः ॥

शक्ता । शक्ष्यति । शक्यतु । अशक्यत् । शक्येत्, शक्यात् लिङौ । अशकत् ॥

शक्यते । शेके । इत्यादि तङुदाहार्यम् ॥

शिशक्षति । शिशक्षते । 'सनिमीमा' इत्यादिनाऽच इस् अभ्यासलोपः । 'स्कोः' इति सलोपः ॥

शाशक्यते । शाशक्ति । शाकयति । अशीशकत् ॥

शक्ता, शक्तः । शक्तो घटः कर्तुं, शकितो घटः कर्तुं—'सौनागाः कर्मणि निष्ठायां शकेरिटमिच्छन्ति विकल्पेन' इति वृत्तिः ॥

## ष्विदा गात्रप्रक्षरणे ॥ ८० ॥

गात्रप्रक्षरणं घर्मस्रुतिः । ञिष्विदेति मैत्रेयादयः । तथा 'निष्ठाशीङ्' इत्यत्र न्यासेप्ययं ञिदेवोदाहृतः । अस्य ञित्त्वं हरदत्तस्यानभिमतम् ; यदाह – 'निष्ठा शीङ्' इत्यत्र "ञिष्विदास्नेहनमोचनयोः' इति ञितो ग्रहणम् । न तु ष्विदा गात्रप्रक्षरण इति दैवादिकस्य ञिद्भिस्साहचर्यात् अस्य चाञित्त्वात्" इति । इदमेवानुसृत्य 'ञित्त्वं तस्यापपाठः' इति पुरुषकारेप्युक्तम् । तथा च अनिट्कारिकावृत्तौ–'स्विद्यतीति श्यना निर्देशो ञिष्विदेत्यस्य निवृत्त्यर्थः' इति । यद्ययमपि ञित्स्यात्, अनेन किं व्यावर्तितं स्यात्? । यद्येवं 'निष्ठा शीङ्' इत्यत्र 'ञितां ग्रहः' इति हरदत्तोक्तिरस्यानिट्त्वादेवाग्रहणसिद्धेरयुक्तेति चेन्न, भावादिकर्मणोः प्रस्वेदितमित्यादौ सेट्त्वसम्भवात् ॥

स्विद्यति । सिष्वेद सिष्वेदिथ सिष्वेदिव – क्रादिनियमादिट् ॥

स्वेत्ता । स्वेत्स्यति । स्विद्यतु । अस्विद्यत् । स्विद्येत्, स्विद्यात्, लिङौ । अस्विदत् ॥

सिष्वित्सति । सेष्विद्यते । सेष्वेत्ति ॥

स्वेदयति । असिष्विदत् ॥

सिस्वेदयिषति – 'सस्विदि' इत्यादिना अभ्यासेणः परस्य सकारस्य 'स्तौतिण्योरेव' इति नियमापवादस्सकारः ॥

स्विन्नः – 'ञिष्विदा स्नेहनमोचनयोः' इति ञीतादिकार्यम् । 'द्युद्भ्यो लुङि' इति परस्मैपदे अस्विदत् इति सिद्धावपि पुषादावस्य पाठोर्थभेदात् ॥

## क्रुध कोपे ॥ ८१ ॥

देवदत्ताय क्रुध्यति — 'क्रुधद्रुह' इति कोपविषये सम्प्रदानत्वम् । तस्यैव 'क्रुधद्रुहोरुपसृष्टयोः कर्म' इति कर्मत्वे, देवदत्तमभिक्रुध्यतीति ॥

चुक्रोध चुक्रोधिथ चुक्रुधिव ॥
क्रोद्धेत्यादि ॥
क्रोधनः — 'क्रुधमण्डार्थेभ्यश्च' इति युच् ॥

## क्षुध बुभुक्षायाम् ॥ ८२ ॥

क्षुध्यति । चुक्षोध । क्षोद्धा । इत्यादि ॥
क्षुत् — सम्पदादित्वात्क्विप् ॥
क्षुधित इति —'तदस्य सञ्जातम्' इतीतचि ॥

## शुध शौचे ॥ ८३ ॥

शुध्यति । शुशोध । शोद्धा । इत्यादि ॥
शुन्धतीति शपि ॥

## षिधु संराद्धौ ॥ ८४ ॥

केचिदूदितं पठन्ति । तदसत्; अनुदात्तोपदेशवैयर्थ्यात् ॥

सिध्यति । सिषेध । सेद्धा । सेत्स्यति । सिध्यतु । असिध्यत् । सिध्येत्, सिध्यात्, लिङौ । असिधत् ॥

सिषित्सति । सेषिध्यते । सेषेद्धि ॥

अन्नं साधयति – 'सिध्यतेरपारलौकिके' इति परलोकप्रयोजनव्यतिरिक्तार्थवृत्तेः सिद्धेः णाविचः स्थाने आत्वम् । पारलौकिके तु तपस्सेधयति तापसम् । अत्र सिद्धिः परलोकार्थे ज्ञानविशेषे वर्तते । तापसस्सिध्यति ज्ञानविशेषमासादयति, तं तपः प्रयुङ्क्ते, स च ज्ञानविशेष उत्पन्नः परलोके जन्मान्तरे फलमभ्युदयलक्षणं उपसंहरन् परलोकप्रयोजनो भवति । अन्नं साधयति ब्राह्मणेभ्यो दास्यामीत्यत्र तु षिधेर्निष्पत्तिरर्थः । तस्याः प्रयोजनमन्नम् । तस्य यद्दानं तत्पारलौकिकम् । न पुनर्निष्पत्तिरेवेति साक्षात्परलोकप्रयोजने सिद्ध्यर्थे चरितार्थत्वात् निषेधस्येह न प्रवृत्तिः ॥

सिद्धः । साङ्काश्यसिद्धः – 'सिद्धशुष्क' इति सप्तमीसमासः । 'तत्पुरुषे कृति बहुलम्' इत्यलुको 'नेन्सिद्धबध्नातिषु च' इतीन्नन्ते सिद्धशब्दे बध्नातौ च निषेधः ॥

सिधित्वा, सेधित्वा, सिद्ध्वा – उदित्वादिड्विकल्पः । इटि 'रलो व्युपधात्' इति कित्त्वविकल्पः ॥

राधादयोनुदात्ता उदात्तेतः ॥

अतः परं विभाषेटः परस्मैपदिनो रधादीनष्टाह–

## रध हिंसासंराद्ध्योः ॥ ८५ ॥

संराद्धिः पाकः । रध्यति । ररन्ध ररन्धतुः ररन्धुः ररन्ध ररन्धिथ ररन्धतुः ररन्ध ररन्धिव ररन्धिम रेध्व रेध्म – 'रधा-

दिभ्यश्च' इतीड्विकल्पः वलाद्यार्धधातुके। तत्रानिटि थलि 'झषस्त-थोः' इति थकारस्य धकारे पूर्वस्य जश्त्वं दकारः। वस्मसोरे-त्वाभ्यासलोपौ। इडादौ लिट्यन्यस्मिंश्चाजादौ 'रधिजभोरचि' इति नुम्। ररन्धिव ररन्धिमेत्यत्र रध् व रध् म इति स्थिते 'असंयोगाल्लिट्कित्' इति कित्त्वात्पूर्वं परत्वादिट् तत्रापि कित्त्वा न्नित्यत्वान्नुमि सतीदानीं संयोगान्तत्वेन वस्मसोः कित्त्वाभावा-त् 'अनिदिताम्' इति नलोपाभावः। हरदत्तस्तु—इटः परत्वमा-श्रित्य 'नेट्यलिटि' इत्यत्राह — इटि सत्यजादित्वात् नुमा भवित-व्यम्। प्रागेव कित्त्वं प्राप्नोति। न च अलिटीत्यस्य वैयर्थ्यं, थ-ल्यर्थवत्त्वात्। एवं तर्हि, धातोरित्यनुवृत्तेः उपदेश एव नुम्भवति, अचीत्येषा विषयसप्तमीत्याह ॥

रधिता, रद्धा — अनिट्पक्षे थलीव धत्वजश्त्वे 'नेट्यलिटि रधेः' इति लिड्वर्जितेडादौ नुमो निषेधः ॥

रधिष्यति, रत्स्यति। रध्यतु। अरध्यत्। रध्येत्, रध्यात् लिङौ। अरधत् — अङि 'रधिजभोः' इति नुमि 'अनिदितां' इति नलोपः ॥

रिरधिषति। रिरत्सति। रारध्यते। रारन्धीति राराद्धि ॥

रन्धयति — नित्यत्वात्पूर्वं नुमि सति अनुपधात्वान्न वृद्धिः। अररन्धत् — 'अनिदितां' इति नलोपो णिलोपस्य स्थानिव-त्त्वात् चङो व्यवधानान्न भवति ॥

रन्धनं, रन्धकः — 'रधिजभोरचि' इति नुम्। क्वसौ तु द्विर्वचनैत्वाभ्यासलोपेषु 'वस्वेकाजाद्' इतीटि नुमि, तस्य संयो-

गान्तत्वेन 'असंयोगाल्लिट्कित्' इत्यातिदेशिककित्त्वाभावेप्यौपदेशिककित्त्वाश्रयणे नलोपे रेथिवानिति ॥

## णश अदर्शने ॥ ८६ ॥

नश्यति । ननाश नेशतुः नेशिथ ननंष्ठ नेशतुः नेशिव नेश्व नेशिम नेश्म । एत्वाभ्यासलोपौ, पूर्ववदिड्विकल्पः । अनिट्पक्षे 'मस्जिनशोर्झलि' इति थलि नुमि । एवमन्यस्मिन्नपि झलादौ ॥

नशिता नंष्टा । नशिष्यति नङ्क्ष्यति । नश्यतु । अनश्यत् । नश्येत्, नश्यात्, लिङौ । अनशत् अनशः अनशम् । 'अत एकहल्' इत्यत्र भाष्यम् –

नशिमन्योरलिट्येत्वं छन्दस्यमिपचोरपि ।
अनेशं मेनकेत्येतत् व्येमानं लिङि पेचिरन् ॥

इति । अत्र कैयटः–"अनेशमिति मिपोम्भावः । पुषादित्वादङादेशः । 'छन्दसि' इति पूर्वेणापि सम्बन्धात् भाषायामेत्वाभावः । एवं तु मेनकेत्यपि भाषायां न प्राप्नोति । यदि त्विष्यते पृषोदरादित्वाद्भविष्यति" इति । हरदत्तोपि – "'अलिटि' इति पादपूरणार्थोनुवादः । अनेशन्निति झेरन्तादेशः । 'अनेशन्नस्येषवः'* । अनेशमिति तु प्रायेण पाठः । तत्र मिपोम्भावः । 'छन्दसि' इति वचनात् मेनकेति च भाषायां न प्राप्नोति । यदीष्यते पृषोदरादिषु द्रष्टव्यम्" इति । वृत्तौ तु – "नशिमन्योरलिट्येत्वं वक्तव्यम् । अनेशत् मेनकाम् । अनेशन् इति नशेर्लुङि पुषादित्वादङ् । मेनकेति 'मनेराशिषि च' इति वुन् । क्षिपकादिषु प्रक्षेपात्

---

* तै. सं ४-५-१.

इत्वं न क्रियते। 'छन्दस्यमिपचोरलित्येत्वं वक्तव्यम्'" इति वाक्यभेदेन छन्दोग्रहणं अमि पचिशेषतया व्याख्यातम्। दुर्गोपि-सामान्येन 'नश एत्' इत्यङि परत एत्वमाह॥

प्रणश्यति — 'उपसर्गादसमासेपि' इति णत्वम्। प्रनष्टे-त्यादौ 'नशेःषान्तस्य' इति णत्वनिषेधः। अत्रान्तग्रहणस्य भू-तपूर्वषान्तत्वाश्रयणार्थत्वात् प्रनङ्क्ष्यतीत्यादावपि न णत्वम्॥

निनशिषति निनङ्क्षति। नानश्यते। नानंष्टि। नाशयति, अनीनशत् — 'बुधयुधनश' इति नित्यं परस्मैपदम्॥

नश्वरः, नश्वरी — 'इण्नश्जि' इति क्वरप्। स्त्रियाम् 'टि-ड्ढाणञ्' इत्यादिना ङीप्॥

प्रणश्यतीति प्रनट् प्रनक् — 'नशेर्वा' इति पदान्तस्य वा कुत्वम्। 'नशेःषान्तस्य' इति णत्वनिषेधः। भूतपूर्वगत्या षा-न्तत्वम्। सा चान्तग्रहणात् तत्राश्रिता॥

नष्टः — 'यस्य विभाषा' इत्यनिट्त्वे 'मस्जिनशोः' इति नुम्। 'अनिदिताम्' इति नलोपः॥

दुःखेन नाशयितव्यो दूणाशः — 'ईषत्' इत्यादिना खल्। 'दुरो दाशनाशदभध्येषु' इति पृषोदरादिपाठात् दुर उत्वम्, उत्तरपदादेष्टुत्वं च॥

नंशुकः — रेणुश्चन्द्रमाश्च। 'पचिनश्योर्नुकन्कनुमौ च' इति नुकन्प्रत्ययो नुमागमश्च॥

# तृप प्रीणने ॥ ८७ ॥

इह प्रीणनं तृप्तिः तर्पणं च । दृश्यते चोभयथा — 'तृप्यन्तु भवन्तः'* 'नाग्निस्तृप्यति काष्ठानाम्' 'पितॄनताप्सीत्सममंस्त बन्धून्' इति ॥

तृप्यति । ततर्प ततृपतुः ततर्पिथ ततर्प्थ ततृप्थ ततृपथुः ततृप ततर्प ततृपिव — 'अनुदात्तस्य चर्दुपधस्य' इति थल्यनिट्पक्षे अमागमविकल्पः । कृते च तस्मिन् यणादेशः ॥

तर्पिता तर्प्ता त्रप्ता । तर्पिष्यति तर्प्स्यति त्रप्स्यति । तृप्यतु अतृप्यत् । तृप्येत्, तृप्यात्, लिङौ । अतृपत् अतृपताम् — पुषादित्वादङ् । 'स्पृशमृशकृषतृपदृपां सिज्वा वक्तव्यः' इति सिच्पक्षे अतर्प्सीत् अतर्पिसष्टामिति । 'नेटि' इति वृद्धिनिषेधः । अनिट्पक्षे त्वमागमे अत्राप्सीत् । अन्यदा अताप्सीत् । उभयत्र 'वदव्रज' इति वृद्धिः ॥

तितर्पिषति तितृप्सति —'हलन्ताच्च' इति सनः कित्त्वात् नामागमो नापि गुणः । तरीतृप्यते । तरीतृपीति तरीतर्प्तीत्यादि । दृप्रिकोरपि नेयम् ॥

तर्पयति । अततर्पत् । अतीतृपत् — उर्दृत्वा ॥

तर्पित्वा, तृप्त्वा ॥

फलानां तृप्तः — 'पूरणगुणसुहितार्थ' इति षष्ठीसमासनिषेधः । सुहितार्थास्तृप्त्यर्थाः ॥

---

* तै. मं. प्र. २—२०.

तृप्रः पुरोडाशः — 'स्फायितञ्चि' इत्यादिना रक् ॥

त्रपिष्ठः, त्रपीयान् ॥

तृप्रमाचष्टे त्रापयति —'प्रियस्थिर' इत्यादिना 'णाविष्ठवत्' इति च त्रपादेशः। पृथ्वादिष्वपाठात् इमनिजस्य नास्तीति वृत्तावुक्तम् ॥

तृपला लता — 'कलतृपश्च' इति कलप्रत्ययः।

अमुं स्वादावपि मैत्रेयात्रेयादयः पठन्ति। तद्वृत्तिन्यासपदमञ्जर्यादिकृतामनभिमतम्। तत्तत्रैवोपपादयिष्यते। अयं युजादौ तुदादौ च। तत्र तुदादौ द्वितीयान्त इत्येके ॥

## दृप हर्षणमोहनयोः ॥ ८८ ॥

मोहनं गर्व इति स्वामी। हर्षविमोचनयोरित्येके। दृप्यतीत्यादि पूर्ववत् ॥

दर्पणः — नन्द्यादिः ॥

अयमुत्क्लेशे तुदादिः। तृपिदृप्योरनुदात्तेत्त्वममर्थम्। इदुरथादित्वाद्विकल्पित इति न तन्निवृत्त्यर्थम् ॥

## द्रुह जिघांसायाम् ॥ ८९ ॥

देवदत्ताय द्रुह्यति —'क्रुधद्रुह' इति कोपविषयस्सम्प्रदानम् ॥
देवदत्तमभिद्रुह्यति — 'क्रुधद्रुहोरुपसृष्टयोः कर्म' इत्युपसृष्टत्वे कर्मत्वम् ॥

दुद्रोह दुद्रुहतुः दुद्रोहिथ — अनिट्पक्षे 'वा द्रुहमुहष्णुहष्णिहाम्' इति झलि पदान्ते च हकारस्य वा घत्वे 'झषस्तथोः' इति थकारस्य धत्वे 'झलां जश् झशि' इति घकारस्य गत्वे, दुद्रोग्धा। घत्वाभावे 'हो ढः' इति ढत्वे धकारस्य धत्वष्टुत्वयोः ढो ढे लोपे, ढ्रलोपदीर्घात्परत्वाद्गुणे, दुद्रोढ दुद्रुहथुः दुद्रुहिव दुद्रुहृ। द्रोहिता द्रोग्धा — घत्वादि पूर्ववत्। द्रोढा—ढत्वादि। द्रोहिष्यति ध्रोक्ष्यति — कृते घत्वे सकारपरत्वेन 'एकाचः' इति भष्भावे 'खरि च' इति चर्त्वं ककारः। ढत्वपक्षेपि कृते ढत्वे भष्भावे च 'षढोः कस्सि' इति कत्वम्; इदमेव रूपम्॥

द्रुह्यतु। अद्रुह्यत्। द्रुह्येत्, द्रुह्यात्। अद्रुहत्॥

दुद्रोहिषति, दुद्रुहिषति — 'रलो व्युपधात्' इति किन्त्वविकल्पः। अनिटि दुध्रुक्षति — घत्वढत्वयोर्भष्भावादि पूर्ववत्॥

दोद्रुह्यते। दोद्रोग्धि दोध्रोढि दोध्रोक्षि। द्रोहयति। अदुद्रुहत्॥

द्रोही — सम्पृचादिना घिनुण्॥

द्रुहित्वा, द्रोहित्वा, द्रुग्ध्वा, द्रुढ्वा। द्रुग्धः, द्रुग्धवान्। द्रूढः, द्रूढवान् — घत्वादि पूर्ववत्। ढत्वे धत्वष्टुत्वढ्रलोपदीर्घाः॥

मित्रध्रुक् मित्रध्रुट् — 'सत्सूद्विषद्रुह' इति क्विपि पदान्तत्वे 'वा द्रुह' इति वा घत्वम्। अन्यदा ढत्वम्। भष्भावस्तूभयत्रापि भवति॥

## मुह वैचित्त्ये ॥ ९० ॥

वैचित्त्यमविवेकः। मुह्यति। मुमोह मुमुहतुः मुमुहिथ मुमोग्ध मुमोढ मुमुहिव मुमुह्व॥

मोहिता मोग्धा मोढा । मोहिष्यति मोक्ष्यति । मुह्यतु ॥ अमुह्यत् । मुह्येत् । मुह्यात् । अमुहत् ॥

मुमुहिषति मुमोहिषति मुमुक्षति ॥

मोमुह्यते । मोमोग्धि मोमोढि ॥

मोहयति–चित्तवत्कर्तृकत्वे 'अणावकर्मकात्' इति परस्मैपदमेव । परिपूर्वत्वे तु–'न पादमि' इत्यादिना निषेधात् 'णिचश्च' इत्यादिना उभयं भवति; परिमोहयति परिमोहयते इति ॥

परिमोही – सम्पृचादिना घिनुण् ॥

मुहित्वा, मोहित्वा, मुग्ध्वा, मूढ्वा । मुग्धः, मूढः ॥

उन्मुक्, उन्मुट् – द्रुहिवत्प्रक्रिया । भष्भावस्तु बशभावान्न भवति ॥

मूर्खः – 'मुहेः खो मूर्च' इति खप्रत्ययो मूरादेशश्च ॥

## ष्णुह उद्गिरणे ॥ ९१ ॥

स्नुह्यति । सुष्णोह सुष्णुहतुः सुष्णोहिथ सुष्णोग्ध सुष्णोढ सुष्णुहिव सुष्णुह्व ॥

स्नोहिता स्नोग्धा स्नोढा । स्नोहिष्यति स्नोक्ष्यति । स्नुह्यतु । अस्नुह्यत् । स्नुह्येत्, स्नुह्यात्, लिङौ । अस्नुहत् ।

सुस्नुहिषति, सुस्नोहिषति – 'स्तौतिण्योरेव' इति निय-

मान्न षत्वम् । सुस्नुक्षति । सोष्णुह्यते । सोष्णोग्धि सोष्णोढि । स्नोहयति । अमुष्णुहत् ॥

स्नोहित्वा, स्नुहित्वा, स्नुग्ध्वा स्नूढ्वा । स्नुग्धः, स्नूढः—सर्वत्राभ्यासात्परस्य 'आदेशप्रत्यययोः' इति षत्वे ष्टुत्वेन 'रषाभ्याम्' इति वा णत्वम् ॥

## ष्णिह प्रीतौ ॥ ९२ ॥

स्निह्यति । सिष्णेह सिष्णेहिथ सिष्णेग्ध सिष्णेढ सिष्णिहिव सिष्णिह्व ॥

स्नेहिता, स्नेग्धा स्नेढा । स्नेहिष्यति, स्नेक्ष्यति । स्निह्यतु । अस्निह्यत् । स्निह्येत्, स्निह्यात् । अस्निहत् ॥

सिस्निहिषति, सिस्नेहिषति, सिस्निक्षति ॥

सेष्णिह्यते । सेष्णेग्धि सेस्नेढि । स्नेहयति । असिष्णिहत् ॥

स्निहित्वा, स्नेहित्वा, स्निग्ध्वा, स्नीढ्वा । स्निग्धः स्नीढः,

उष्णिक्—'ऋत्विक्' इत्यादिना उत्पूर्वात्स्निह्यतेः क्विन् । उदोऽन्तलोपः सस्य च षत्वं निपात्यते । 'क्विन्प्रत्ययस्य' इति हकारस्य घत्वे, जश्त्वे, चर्त्वम् ॥

उष्णिहा—अजादिपाठात् टाप् ॥

## वृत् ॥

विभाषेटः परस्मैपदिनो रधादयो वृत्ता इत्यर्थः । अत्र वृत्करणं रधादिपरिसमाप्त्यर्थम्, पुषादयस्त्वागणान्तात् । यदुक्तं तरङ्गिण्यां—रधादीन् परिसमाप्य 'एतदन्तः पुषादिरित्येके । अतोऽग्रे शमादि ' इति, तद्भाष्यवार्तिकविरोधादुपेक्ष्यम् । तथाहि — 'अस्यतिवक्तिख्यातिभ्योऽङ्' इत्यत्र 'अस्यतिग्रहणमात्मनेपदार्थं द्रष्टव्यम् । किमुच्यते आत्मनेपदार्थमिति? न पुनः परस्मैपदार्थमपि स्यात् पुषादित्वात् पुषादिपाठात्परस्मैपदेषु अङ्भविष्यति ' इति । अत्र कैयटः— 'पुषादय आगणान्तात् अन्तरा तु वृत्करणं रधादिपरिसमाप्त्यर्थम्, न तु पुषादिपरिसमाप्त्यर्थमिति प्रतिपादनाय सुहृद्भूत आचार्य आह — अस्यतिग्रहणमिति ' । पुषादिसूत्रे न्यासपदमञ्जर्योरप्येवमुक्तम् ॥

अत्र 'वा द्रुहादीनाम्' इति लाघवेन घत्वे विधातव्ये प्रतिपदपाठो यङ्लुगर्थः । गणनिर्देशे हि 'निर्दिष्टं यद्गणेन च ' इति वचनाद्घत्वं न स्यात् ॥

अथ पुषादीनेव नित्येटः परस्मैपदिन आह—

## शमु उपशमने ॥ ९३ ॥

शाम्यति । शशाम शेमतुः शेमिथ शेमिव ॥

शमिता । शमिष्यति । शाम्यतु । अशाम्यत् । शाम्येत् । आशिषि, शम्यात् । अशमत् । 'शमामष्टानां दीर्घः श्यनि ' इति दीर्घः ॥

शिशमिषति । शंशम्यते । शंशन्ति शंशान्तः ॥

निशमयति वचः — अमन्तत्वान्मित्वम् । अशामि अशमि — 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' इति णेश्चिणि पक्षे दीर्घः ॥

निशामयति रूपम् — 'शमोऽदर्शने' इति दर्शने मित्वनिषेधः ॥

शमी — 'शमित्यष्टाभ्यो घिनुण्' इति घिनुण् । 'नोदात्तोपदेशस्य मान्तस्य' इति वृद्धिनिषेधः ॥

शमयतीति शमनः — बाहुलकात्कर्तरि ल्युः ॥

शमित्वा, शान्त्वा — 'उदितो वा' इतीड्विकल्पः ॥

शान्तः — 'यस्य विभाषा' इतीण्णिषेधः ॥

प्रशाम्यतीति प्रशान् — 'अनुनासिकस्य क्विझलोः क्ङिति' इति क्विपि दीर्घः । 'मोनो धातोः' इति नकारः पदान्ते । स्वरादित्वादस्याव्ययत्वम् ॥

शान्तिः — 'तितुत्र' इतीण्णिषेधः ॥

शान्तः — ण्यन्तात् 'वा दान्तशान्त' इति णिलुगनिट्त्वं च पक्षे निपात्यते । अन्यदा शमितः । 'निष्ठायां सेटि' इति णिलोपः ॥

शमलम् — 'शकिशम्योर्नित्' इति कलप्रत्ययः ॥

शम्बः — 'शमेर्बन्' इति बन् प्रत्ययः ॥

शम्बाकरोति – 'कृञो द्वितीयतृतीयशम्ब' इति डाच्। अनुलोमकृष्टं प्रतिलोमं कृषतीत्यर्थः। 'शम्बशब्दस्यात्र प्रातिलोम्ये वृत्तिः। कृञश्च कर्षणे' इति हरदत्तः॥

शम्बुः – 'शमेर्बुन्' इति बुन् प्रत्ययः॥

शाम्बव्यम् – गर्गादित्वाद्यञ्॥

शमी – शमशब्दात्पिप्पल्यादित्वान्ङीष्॥

शम्या विकारः अवयवो वा शामीलम् – 'शम्याष्ट्लञ्' टित्त्वात् स्त्रियां शामीली॥

## तमु काङ्क्षायाम्॥ ९४॥

ताम्यतीत्यादि शमिवत्॥

ताम्बूलम्, ताम्बूरम् – 'तमेर्बुक' इत्यूरोलचौ प्रत्ययौ। णिद्वद्भावाद्वृद्धिः, बुगागमश्च॥

ताम्रम् – 'अमितम्योर्दीर्घश्च' इति रकि दीर्घः॥

तमसा – नदी। 'अत्यमिचमितमि' इत्यसच्॥

तमः – असुन्॥

अवतमसम्, सन्तमसम्, अन्धतमसम् – 'अवसमन्धेभ्यस्तमसः' इत्यच् समासान्तः॥

तमिस्रा – 'ज्योत्स्ना तमिस्रा' इति संज्ञायां मत्वर्थीयो रः, उपधायाश्चेकारः। 'स्त्रीत्वमतन्त्रम्, अन्यत्रापि दृश्यते, तमिस्रं नभः' इति वृत्तौ॥

तमसाकृतम् – 'ओजस्सहोम्भस्तमसस्तृतीयायाः' इत्यलुक् ॥
तमी – इन्नन्तात् ङीप् ॥

## दमु उपशमने ॥ ९५ ॥

दाम्यतीत्यादि ॥

दमयतीति दमनः – नन्द्यादिः ॥

अरिन्दमः – 'संज्ञायां भृतॄवृजि' इत्यादिना खच् ॥

दमयति दमयते – 'अणावकर्मकात्' इति परस्मैपदस्य 'न पादमि' इति निषेधः ॥

दान्तः, दमितः – 'वा दान्त' इति ण्यन्तान्निष्ठायामनिट्त्वम्, णिलुक्च पक्षे ॥

दमुनाः – 'दमेरुनसिः' ॥

दण्डः – 'अमन्ताड्डः' ॥

द्विदण्डि प्रहरति – 'द्विदण्ड्यादिभ्यश्च' इति बहुव्रीहाविच्प्रत्ययान्तो निपात्यते । द्वौ दण्डावस्मिन्प्रहरण इति विग्रहः । समुदायनिपातनस्य रूढ्यर्थत्वात् द्विदण्डा शालेत्यत्र न भवति । तिष्ठद्गुप्रभृतिषु 'इच्' इति पाठात्, इजन्तस्याव्ययीभावात् अव्ययत्वम् ॥

दण्डिनोपत्यं दाण्डिनायनः – इन्नन्तात् 'नडादिभ्यः फक्' इति फकि 'दाण्डिनायन' इति निपातनाट्टिलोपाभावः । शमिना सहास्यापाठः सकर्मकत्वात् । उपशमन इति ण्यन्ते द्रष्टव्यः ॥

## श्रमु तपसि खेदे च ॥ ९६ ॥

श्राम्यतीत्यादि । अत्र वर्धमानो 'नोदात्तोपदेश' इति वृद्धिनिषेधे प्राप्ते, प्रयोगदर्शनात् वा श्रमेर्वृद्धिमाह । तत् 'अवमिकमिचमीनामिति वक्तव्यम्' इति वम्यादीनामेव भाष्यवार्तिकयोः वृद्ध्यङ्गीकारात्, "कथं 'सूर्यविश्रामभूः' इति ? एवमादिकं प्रयोगं अन्यायमेव मन्यन्ते" इति वृत्तावुक्त्वा-च्चायुक्तम् ॥

कुमारी चासौ श्रमणा च कुमारश्रमणा—'कुमारश्रमणादिभिः' इति कर्मधारयः । श्रमणाशब्देन कुमारशब्दस्य सामानाधिकरण्याभावत् लिङ्गविशिष्टपरिभाषया कुमारीशब्दस्य समासे 'पुंवत्कर्मधारय' इति पुंवद्भावः । अत एव निर्देशाल्लुचः, युज्वा ॥

## भ्रमु अनवस्थाने ॥ ९७ ॥

भ्राम्यतीत्यादि । 'वा भ्राश' इति श्यनो विकल्पनात् यदा शप् तदा भ्रमतीत्यादि । शेषं भौवादिकवत् । 'शमामष्टानाम्' इति श्यनि दीर्घः, ल्युङ्चङ्‌ विशेषः ॥

भ्रमी – शमादित्वाद्घिनुण् । अत्रात्रेयः – अभिधानवशात् अकर्मकादेव अयमिष्यते । तेन भ्रमिता वनमिति तृन्नेवेति । एवं चायं सकर्मकोकर्मकश्चेत्यनेनासूचि ॥

## क्षमू सहने ॥ ९८ ॥

क्षाम्यति । चक्षाम चक्षमतुः चक्षमिथ चक्षन्थ चक्षमिव चक्षण्व – 'म्वोश्च' इति नत्वे णत्वम् ॥

क्षमिता, क्षन्ता । क्षमिष्यति, क्षंस्यति । क्षाम्यतु । अक्षाम्यत् । क्षाम्येत्, क्षम्यात् । अक्षमत् ॥

चिक्षमिषति चिक्षंसति । चंक्षम्यते । चंक्षन्ति । क्षमयति । अचिक्षमत् ॥

क्षमी ॥

क्षन्त्वा, क्षमित्वा — ऊदित्वादिड्विकल्पो वलादौ ॥

क्षान्तः, क्षान्तिः — 'यस्य विभाषा' 'तितुत्र' इति वेण्णिषेधः ॥

क्षमेति षितो भौवादिकस्य । अमुमपि केचित् षितं पठन्ति, तदसत् । तथा च स्वामी — 'केचिदत्रापि क्षमूषिति षितं पठन्ति, तदसत् । क्षमू सहन इति सभ्याः' इति । वर्धमानोपि— 'क्षमेर्दैवादिकस्याननुबन्धस्य क्षान्तिस्स्यादेव' इति ॥

अषितः क्षाम्यतेः क्षान्तिः, क्षमूषः क्षमतेः क्षमा ।
इति दैव पुरुषकारयोरपि ॥

## क्लमु ग्लानौ ॥ ९९ ॥

क्लाम्यति क्लामति । चक्लाम । क्लमिता इत्यादि — 'वा भ्राश' इत्यादिना श्यन्विकल्पः । शपि 'ष्ठिवुक्लमु' इत्येव श्यन्यपि दीर्घे सिद्धे शमादिपाठो घिनुणर्थः * ॥

* क—घिनुणाद्यर्थः,

## मदी हर्षे ॥ १०० ॥

माद्यतीत्यादि । धर्मात्प्रमाद्यति – ' जुगुप्साविरामप्रमादार्थानामुपसङ्ख्यानम् ' इति धर्मोपादानम् । मदयति – ' मदी हर्षग्लेपनयोः ' इति घटादिपाठान्मित्त्वम् । अन्यत्र मादयति ॥

माद्यत्यनेन मन इति मद्यम् – ' गदमद ' इत्यनुपसर्गे यत् । ' कृत्यल्युटो बहुलम् ' इति करणेपि भवति ॥

मदयतीति मदनः – नन्द्यादित्वाण्णयन्ताल्लुचस्संज्ञायाम् ॥

इरा जलम् , तेन माद्यतीति इरम्मदः –' उग्रम्पश्येरम्मद ' इति खशि श्यनभावो निपात्यते ॥

उन्मदिष्णुः – ' अलङ्कृञ् ' इत्यादिना इष्णुच् ॥

उन्मादी – शमादित्वाद्घिनुण् ॥

मदः – ' मदोनुपसर्गे ' इत्यप् । ' व्यधजपोरनुपसर्गे ' इत्यत्रैव मदिग्रहणेपि कर्तव्ये पृथक्सूत्रारम्भात् उन्माद इति घञपीति न्यासः ॥

प्रमदः, सम्मदः – ' प्रमदसम्मदौ हर्षे ' इत्यप्निपात्यते ॥

मदित्वा, मत्तः, मत्तवान् – ईदित्त्वादनिट्त्वम् । ' न ध्याख्या' इत्यादिना नत्वनिषेधः ॥

मदिरा – ' इषिमदि ' इत्यादिना किरच् । शमादयोष्टौ वृत्ताः ॥

मन्दते मदति इति स्तुत्यादौ शपि । मद तृप्तियोग इति चुरादावाधृषीयः ॥

## असु क्षेपणे ॥ १०१ ॥

अस्यति । आस आसिथ । असिता । असिष्यति । अस्यतु । आस्यत् । अस्येत् अस्यात् । आस्थत् आस्थताम्— 'अस्यतिवक्तिख्यातिभ्यः' इति कर्तरि लुङ्यङि 'अस्यतेस्थुक्' इति थुगागमः । पुषादित्वादङि सिद्धे, अस्यतिग्रहणमात्मनेपदार्थम् । तच्च कर्मकर्तरि 'उपसर्गादस्यत्यूह्योर्वा वचनम्' इति शुद्धेपि कर्तरि सोपसर्गत्वे पक्षे तङो विधानादस्ति ॥

निरस्यते । निरासे निरासिषे । निरसिता । निरसिष्यते । निरस्यताम् । निरास्यत । निरस्येत । निरसिषीष्ट । निरास्थत निरास्थेताम्—'अस्यति' इत्यङ् । इदमेव कर्मकर्तर्यपि रूपम् । कर्मणि चिण्सिचावेव, निरासि निरासिषाताम् ॥

असिसिषति । निरसिसिषते निरसिसिषति—'पूर्ववत्सनः' इति वा तङ् । आसयति । असिसत् ॥

समस्यम्, संन्यस्यम्, * समस्या—'ऋहलोर्ण्यत्' 'संज्ञापूर्वको विधिरनित्यः' इति वृद्ध्यभाव इत्यात्रेयः ॥

प्रास्यन्त्येतमिति प्रासः—'अकर्तरि च कारके' इति घञ् इति वृत्तौ । आत्रेयस्तु 'हलश्च' इति करणे घञमाह ॥

* ख—अत्यस्यम्.

प्रासनम् — करणे ल्युट् ॥

द्व्यहात्यासं गाः पयः पाययति, द्व्यहमत्यासमिति वा— 'अस्यतितृषोः क्रियान्तरे कालेषु' इति काले कर्मण्युपपदे क्रियान्तरे क्रियाया व्यवधायकेऽर्थे वर्तमानयोरस्यतितृषोः णमुल् । अत्र पाययित्वा द्व्यहमत्यस्य पाययतीत्यर्थः । अत्यसनक्रियया पानक्रिया व्यवधीयते । 'तृतीयाप्रभृतीनि' इति समासविकल्पः ॥

असित्वा, अस्त्वा — उदित्वादिड्विकल्पः । अस्तः, अस्तवान् 'यस्य विभाषा' इतीण्णिषेधः ॥

अस्तमनेनासितमनेन — "सौनागाः कर्मणि निष्ठायां शकेरिटमिच्छन्ति विकल्पेन, अस्यतेर्भावे" इति 'विभाषा भावादिकर्मणोः' इत्यत्र वृत्तौ ॥

अस्तंगत्य — 'अस्तं च' इति क्रियायोगे गतित्वात् अस्तंशब्दस्य समासः । अत एव निर्देशादस्तशब्दस्य मान्तत्वमित्यात्रेयः । अव्युत्पन्नोऽव्ययमिति वृत्तिन्यासपदमञ्जर्यादौ ॥

तरङ्गात्यस्तः — 'द्वितीयाश्रित' इति समासः ॥

असुरः — 'असेरुरन्' इत्युरन् । प्रज्ञादित्वादासुरः ॥

स्वसा — 'सुञ्यसेर्ऋन्' इति सावुपपदे ऋन्, अनङादि । 'न षट्स्वस्रादिभ्यः' इति 'ऋन्नेभ्यः' इति ङीपो निषेधः ॥

स्वसुरपत्यं स्वस्रीयः — 'स्वसुश्छः' इति छः ॥

पितृष्वसुरपत्यं पैतृष्वस्रीयः, पैतृष्वसेयः — 'पितृष्वसुश्छण्' ढकि तु 'ढकि लोपः' इत्यन्तलोपः । अत एवानुवादाड्डक् ॥

मातृष्वस्रीयः, मातृष्वसेयः —'मातृष्वसुश्च' इति छण्, ढकि लोपः । 'मातृपितृभ्यां स्वसा' इति षत्वम् । मातुस्स्वसा, मातुष्ष्वसा — 'विभाषा स्वसृपत्योः' इति पक्षे अलुक् । 'मातुः पितुर्भ्यामन्यतरस्याम्' इत्यलुकि षत्वविकल्पः स्वसृसकारस्य विसर्जनीयस्य सत्वे ष्टुत्वेन षत्वम् । एवं पितुस्स्वसा, पितुष्ष्वसा इति ॥

असुः — 'शॄस्वृ' इत्यादिना उप्रत्ययः । अत्र केचित् 'नेर्गद' इत्यादौ तन्त्रेणाकारप्रश्लेषेण अयमपि निर्दिष्ट इति । प्रण्यस्यतीत्यादौ णत्वमिच्छन्ति ॥

अस्तीति लुकि । असते असतीति शपि ॥

## यसु प्रयत्ने ॥ १०२ ॥

यस्यति यसति । ययास येसतुः । यसिता । यसिष्यति यस्यतु यसतु । अयस्यत् अयसत् ॥

यस्येत्, यस्यात्, लिङौ । अयसत् । 'यसोनुपसर्गात्' इति श्यनो विकल्पनात्तदभावे शपि । उपसृष्टात्तु प्रयस्यतीति श्यनेव । सम्पूर्वत्वेतु 'संयसश्च' इति विकल्पः, संयस्यति संयसतीत्यादि ॥

यियसिषति । यायस्यते । यायस्ति ॥

आयासयति, आयासयते – ‘अणावकर्मकाच्चित्तवत्कर्तृकात्’ इति परस्मैपदस्य ‘न पादमि’ इत्यादिना निषेधः ॥

आयासी – सम्पृचादिना घिनुण् ॥

यस्त्वा, यसित्वा – उदित्वादिड्विकल्पः ॥

यस्तः, यस्तवान् ॥

## जसु मोक्षणे ॥ १०३ ॥

जस्यतीत्यादि यस्यतिवत् ॥

अजस्रम् – ‘नमिकम्पिस्म्यजस’ इति नञ्पूर्वाज्जसेरप्रत्ययः । स्वभावादयं क्रियासातत्ये । ‘जासिनिप्रहण’ इति कर्मणि षष्ठीविधौ हिंसार्थग्रहणात् अस्य बद्धान् जासयतीति द्वितीयैव ॥

जसिरक्षणे, जसु हिंसायाम्, जसु ताडने, इति त्रयं चुरादौ ॥

## तसु उपक्षये ॥ १०४ ॥

## दसु च ॥ १०५ ॥

तस्यति । दस्यति । इत्यादि ॥

दासितः । दस्तः – ‘वा दान्त’ इत्यादिना पक्षे णिलुगिडभावश्च ॥

दस्रौ — 'स्फायितञ्चि' इत्यादिना रक्। पुष्पवदादिवदयं नित्यं द्विवचनान्तः ॥

दाने दासति दासत इति शपि गतम् ॥

## वसु स्तम्भे ॥ १०६ ॥

वस्यति । ववास ववसतुः — 'न शसददवादि' इत्येत्वाभ्यासलोपनिषेधः । वसितेत्यादि । अयं दन्तोष्ठ्यादि*रित्यात्रेयादयः । तथैव दैवपुरुषकारयोः—

वस्यति स्तम्भने, वस्ते च्छादने वसतेर्वसेत् । इति ।

अपरे बकारादिमाहुः । 'घसिश्च सान्तेषु वसिः प्रसारणी' इत्यनिट्कारिकाव्याख्याने वृत्तौ प्रसारणीतिवचनात् वस आच्छादन इत्यस्य इड्भवतीति वस्तेरेव प्रत्युदाहरणात् वृत्तिकृतोपि बशादित्वमभिमतं प्रतीयते । एवं हि बस्तशब्दोपि सिद्ध्यति ।

शमादय एतदन्ता उदितः, क्षाम्यतिमाद्यती वर्जयित्वा ॥

## व्युष विभागे ॥ १०७ ॥

अयं दाहे पूर्वं पठितः, उदाहृतश्च ; इह तु विभागे अव्युषदित्यङर्थः पाठः । केचिदमुमोष्ठ्यादिं दन्त्यान्तमिच्छन्ति व्युसेति । अपरे त्वयकारं वुसेति ॥

---

* ख—अयंचोष्ठ्यादि. † क—वसयेद्वसे दिति । [वसने वसेत्.]

## प्लुष दाहे ॥ १०८ ॥

प्लुष्यतीत्यादि । इहपाठः अप्लुषत् इत्यङर्थः । पूर्वत्र पाठस्तु अप्लोषीत् इति सिजर्थः ॥

## बिस प्रेरणे ॥ १०९ ॥

ओष्ठ्यादिः । बिस्यतीत्यादि ॥

बिसं — इगुपधलक्षणः कः ॥

बिस्तः — बाहुलकादौणादिकस्तन्, अगुणत्वं च । 'तितुत्र' इतीण्णिषेधः ॥

द्वाभ्यां बिस्ताभ्यां क्रीता द्विबिस्ता, द्वैबिस्तिकी — 'बिस्ताच्च' 'बहुपूर्वाच्च वक्तव्यम्' इति द्वित्रिबहुपूर्वाद्बिस्तान्ताद्विगोः परस्यार्हीयस्य ठञो विभाषा लुक् । 'द्विगोः' इति ङीपः 'अपरिमाणबिस्त' इति निषेधः । अत एव बिस्तेति निर्देशाद्वा निष्ठायामनिट्त्वम् । लुगभावे तु 'परिमाणान्तस्य' इत्युत्तरपदवृद्धिः । 'टिड्ढाणञ्' इत्यादिना ङीप् । एवं त्रिबहुपूर्वादपि द्रष्टव्यम् ॥

## कुस श्लेषणे ॥ ११० ॥

कुस्यतीत्यादि ॥

कुसितायी — 'वृषाकप्यग्नि' इत्यादिना क्तप्रत्ययान्तत्वात् ङीबुदात्तः, ऐकारोन्तादेशः । दुर्गस्तालव्यान्तं पपाठ; कुशशब्दस्य दर्शनात् । सतु भौवादिकादपि सिद्धः ॥

## बुस उत्सर्गे ॥ ११११ ॥

बुस्यतीत्यादि ॥

बुसं — इगुपधलक्षणः कः ॥

यस्मिन्काले बुसं खले वर्तते स कालः खलेबुसम् — 'तिष्ठद्गुप्रभृतीनि च' इत्यव्ययीभावसमासः । अयं प्रथमान्त एव, विभक्त्यन्तरेण न सम्बध्यत इति वृत्तौ ॥

बुस्तम् — पूर्ववत्तनीडभावः, अर्धर्चादिषु पाठाद्वा निष्ठायामनिट्त्वम् ॥

## मुस खण्डने ॥ १११२ ॥

मुस्यतीत्यादि । दन्त्यान्त इति सर्वे । आत्रेयस्तु कातन्त्रे मूर्धन्यान्तोयम् । तथा च 'राघवस्यामुषः कान्ताम्' इति भट्टिकाव्ये प्रयोगश्चेति पाठान्तरमप्याह । मुसलमिति अस्मादेव औणादिकः कलप्रत्ययः इति वदतोः आत्रेयमैत्रेययोरन्येषामप्यमुं सान्तं पठतां 'भ्रमिमस्योरुच्चोपधायाः' इति मसेर्मुसलव्युत्पत्तिः अनार्षेति मतम् ॥

मुसली — गृहगोधिका । गौरादिः ॥

मुसलेन वधमर्हति मुसल्यः — दण्डादित्वाद्यत् ॥

मुस्ता — बाहुलकादौणादिके तनि 'तितुत्र' इति इण्णिषेधः ॥

मुस्तकम् — संज्ञायां कन्, अर्धर्चादिः ॥

## मसी परिमाणे ॥ ११३ ॥

मस्यति । ममास मेसतुः । मसिता । मसिष्यति । मस्यतु । अमस्यत् । मस्येत्, मस्यात् । अमसत् ॥

मिमसिषति । मामस्यते । मामस्ति । मासयति । अमीमसत् ।

मस्तः, मस्तवान् — ईदित्वादनिट्त्वम् ॥

मस्तकम् — संज्ञायां कन् ॥

मस्तु — 'सितनि' इति तुन् । 'तितुत्र' इतीण्निषेधः । अस्यादयो मसिपर्यन्ता दन्त्यान्ताः । अत्र क्वचित्*आद्यन्त व्यत्यासेन समीति पाठः† ॥

## लुट विलोडने ॥ ११४ ॥

लुट्यति । अलुटत् इत्यादि । भूवादिपाठात् अलोटीत् इति सिजप्यस्ति । प्रतिघाते तु तुतादिपाठादङप्यस्ति, अलुटत् अलोटिष्ट इति ॥

लोट्यतीति कण्ड्वादियगन्तः ॥

## उच समवाये ॥ ११५ ॥

उच्यति । उवोच ऊचतुः उवोचिथ पिद्वचनेषु परत्वाद्गुणे,

* ख—कण्वः. † ख—पपाठ.

पश्चाद्विर्वचने 'अभ्यासस्यासवर्णे' इत्युवङ्। यद्यपि द्विर्वचने गुणस्य स्थानिवत्त्वम्, तथाप्युत्तरखण्डस्य 'वार्णादाङ्गं बलीयः' इति सवर्णदीर्घात्पूर्वं गुणे अभ्यासस्योवङ्॥

ओचिता। ओचिष्यति। उच्यतु। औच्यत्। उच्येत्, उच्यात् लिङौ। मा भवानुचिचत्॥

ओचिचिषति इत्यादावपि द्विर्वचनात्पूर्वं गुणः। अत्र च ज्ञापकं 'रलो व्युपधात्' इत्यत्र हलादिग्रहणेन अजादेर्गुणार्थः कित्त्वपर्युदासः। यदि च पूर्वं द्विर्वचनं स्यात् अकित्त्वेप्यनुपधात्वात् गुणो न भविष्यतीति किं तेन॥

ओचित्वा — 'न क्त्वा सेट्' इत्यकित्त्वम्॥

उचितः। औचित्यम् — ब्राह्मणादित्वात् ष्यञ्॥

औचिती — ष्यञन्तात् षित्त्वान्ङीषि 'हलस्तद्धितस्य' इति यलोपः॥

नियमेनोच्यतीति न्योकः शकुन्तः — इगुपधलक्षणः कः॥

नियमेनास्मिन् शकुन्ताः समवयन्तीति न्योको वृक्षः घञर्थे कः॥

ओकः — अच् *। 'ओकः' इति निपातनात्कुत्वम्, गुणश्च॥

ओकः, ओकसी — गृहम्। असुनि बाहुलकात्कुत्वम्॥

उल्बम् — 'उल्बादयश्च' इति बप्रत्ययः। चकारस्य च लकारो गुणाभावश्च निपात्यते॥

---

* क—[अच् इतिनास्ति.

# भृशु भ्रंशु अधः पतने ॥ ११६-११७ ॥

भृश्यति । बभर्श बभृशतुः बभृशुः बभर्शिथ बभृश बभृशिव । भर्शिता । भर्शिष्यति । भृश्यतु । अभृश्यत् । भृश्येत्, भृश्यात् । अभृशत् ॥

बिभर्शिषति । बरीभृश्यते । बरीभर्ष्टि । इत्यादि ॥

भर्शयति । अबीभृशत्, अबभर्शत् — उदृद्धा ॥

भृशम् — इगुपधलक्षणः कः ॥

अभृशो भृशो भवति भृशायते — 'भृशादिभ्यो भुवि' इति क्यङ् ॥

भार्श्यम्, भ्रशिमा — दृढादित्वात् ष्यञिमनिचौ ॥

भ्रशिष्ठः, भ्रशीयान् — 'र ऋतो हलादेः' इतीष्ठेमेयस्सु ऋकारस्य रशब्दः ॥

भ्रशयति — 'णाविष्ठवत्' इति रत्वम् ॥

भर्शित्वा, भृष्ट्वा — उदित्वादिड्विकल्पः ॥

भृष्टः, भृष्टवान्,

भ्रश्यति — 'अनिदिताम्' इति नलोपः ।

बभ्रंश बभ्रंशतुः बभ्रंशिथ बभ्रंशिव ॥

भ्रंशिता । भ्रंशिष्यति । भ्रश्यतु । अभ्रश्यत् । भ्रश्येत्, भ्रश्यात् । अभ्रशत् ॥

बिभ्रंशिषति । बाभ्रश्यते । येपि भ्रंशिं भूवादावपि तालव्योष्मान्तं पठित्वा, नीक्सूत्रेपि तथा पठन्ति, तेपि ध्वंसत्यादि-

साहचर्याद्दैवादिकस्यैव नीकं कुर्वन्ति, न त्वस्य । येषां तु भूवादौ नीकूसूत्रे च दन्त्यान्तपाठः, तेषामप्यस्य नीको नैव प्रसङ्गः ॥

बाभ्रंष्टि । भ्रंशयति ॥

भ्रंशित्वा, भ्रष्ट्वा, भ्रष्टः — व्रश्चादिना षत्वेऽनिट्त्वे, सर्वत्र क्ङित्यनुनासिकलोपः ॥

## वृश वरणे ॥ ११८ ॥

वृश्यतीत्यादि भृश्यतिवत् । अनुदित्वं विशेषः ॥

वृशिष्ठः, वृशीयान् ॥

वृशयतीत्यत्र 'र ऋतः' इति रत्वं न भवति ;

पृथुं मृदुं भृशं चैव कृशं च दृढमेव च ।
परिपूर्वं वृढं चैव षडेतान् रविधौ स्मरेत् ॥

इति परिगणनात् ॥

## कृश तनूकरणे ॥ ११९ ॥

कृश्यतीत्यादि भृशिवत् । अस्याप्यनुदित्त्वं विशेषः ॥

कृशः — 'अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः' इति निष्ठायां निपातितः । सोपसर्गत्वे तु प्रकृशितः परिकृशितः — प्रादिसमासः ॥

क्रशिमा । क्रशिष्ठः । क्रशीयान् । क्रशयति — भृशिवत् रत्वं इमनिच्च ॥

कृशित्वा, कर्शित्वा — 'तृषिमृषिकृशेः काश्यपस्य' इति वा किस्त्वम् ॥

कृशानुः — 'कृतृन्यञ्जि' इत्यादिनानुक् ॥

## ञि तृष पिपासायाम् ॥ १२० ॥

तृष्यतीत्यादि ॥

तृषित्वा, तर्षित्वा — 'तृषिमृषि' इत्यादिना वा किस्त्वम् । तृष्णक् — 'स्वपितृषोर्नजिङ्' इति नजिङ् ॥

द्व्यहतर्षं गाः पाययति द्व्यहं तर्षमिति वा । अत्र पाययित्वा, द्व्यहमतिक्रम्य पाययतीत्यर्थः । 'अस्यतितृषोः' इति णमुल् । 'तृतीयाप्रभृतीनि' इति समासविकल्पः ॥

तृट्, तृष्णा — 'तृषिशुषिरसिभ्यः कित्' इति नप्रत्ययः । ञित्त्वं वर्तमाने क्तार्थम् ॥

तृषितमस्य सञ्जातं तृषितः — अर्श आदिः ॥

## [illegible] तुष्टौ ॥ १२१ ॥

हृष्यतीत्यादि । श्यनडौ वर्जयित्वा भौवादिकवत् । अयं उदिदिति नन्दीति स्वामी । तद्वृत्त्यादिविरोधादुपेक्ष्यम् [illegible] 'हृषु [illegible]मसु' इत्यत्र 'हृषु अलीक इत्ययं नि[illegible] [illegible]ष तुष्टावित्ययं सेट्, अनयोरुभयोरिदं ग्रहणमित्युभयत्र विभाषेयम्' इति । अत्रैव न्यासे "हृषु अलीक इत्ययमनिडिति । उ-

दितोवा' इति क्त्वाप्रत्यय इड्विकल्पविधानात् 'यस्य विभाषा' इति निष्ठायामनिट्, हृष तुष्टावित्ययं सेट्" इति। वर्धमानोप्येवमाह ॥

## रुष रोषे ॥ १२२ ॥

देवदत्ताय रुष्यति – 'क्रुधद्रुह' इति कोपविषयस्सम्प्रदानम् ॥

रुरोष रुरोषिथ रुरुषिव ॥

रोष्टा, रोषिता। रोषिष्यति। रुष्यतु। अरुष्यत्। रुष्येत् रुष्यात्। अरुषत् ॥

रुरुषिषति। रुरोषिषति ॥

रुषित्वा रोषित्वा रुष्ट्वा – 'रलो व्युपधात्' इति सेटः क्त्वासनोः कित्वविकल्पः। 'तीषसह' इति तादाविड्विकल्पः ॥

रुषितः, रुष्टः – 'रुष्यमत्वर' इति निष्ठायामिड्विकल्पः। भावादिकर्मणोर्निष्ठायास्सेटः 'उदुपधात्' इति कित्त्वविकल्पो भौवादिकानामेवेति प्रागेवोक्तत्वादस्य न भवति ॥

इह केचित् रिष हिंसायां चेति पठन्ति। 'नारिष्यति न व्यथते' इत्यादयश्च प्रयोगा दृश्यन्ते। आत्रेयमैत्रेयादयस्तु न पेठुः ॥

## डिप क्षेपे ॥ १२३ ॥

डिप्यति। डिडेप डिडेपिथ डिडिपिव। डेपिता। डेपिष्यति। डिप्यतु। अडिप्यत्। डिप्येत् डिप्यात्। अडिपत् ॥

डिडेपिषति । डिडिपिषति ॥

डिपित्वा, डेपित्वा ॥

डेडिप्यते । डेडेप्ति । डेपयति । अडीडिपत् ।

अयं तुदादौ । चुरादौ तु सङ्घाते च । इह क्वचित् 'ष्टूप समुच्छ्राये' इति पठ्यते, तदनार्षम् । 'स्त्यः प्रसारणमुच्च' इति स्त्यायतेः पप्रत्यये यकारस्य उकारे, सम्प्रसारणे दीर्घे, स्तूपशब्दव्युत्पादनात् । अत एवात्रेयमैत्रेयादयोऽपि न पठन्ति ॥

## कुप क्रोधे ॥ १२४ ॥

कुप्यतीत्यादि रुप्यतिवत् । इट् सर्वत्र नित्यः । देवदत्ताय कुप्यति – 'क्रुधद्रुह' इति कोपविषयस्य सम्प्रदानत्वम् ॥

कुप्रं अरण्यम् – 'ऋज्रेन्द्र' इत्यादौ निपातितः * ॥

अथ भाषार्थश्चुरादौ ॥

## गुप व्याकुलत्वे ॥ १२५ ॥

गुप्यतीत्यादि ॥

[illegible] ॥

जुगुप्सते इति शपि । गोपयतीति चुरादौ ॥

## युप रुप लुप विमोहने ॥ १२६-१२८ ॥

युप्यति । रुप्यति । लुप्यति । अविदूरविकृष्यौ लौकिकेनैव लोपिना साहचर्यात्तौदादिकस्य लुपेर्ग्रहणं इत्यस्यैव ग्रहणमिति नैवेत्य ॥

---

* उणादिसूत्रेष्वादिमे 'ऋज्रेन्द्र' (२-२-२८) इति सूत्रे कुप्रशब्द [illegible] निपातितः [illegible] [illegible] कोऽपुद्ध्यनुदित एवं पठ्यते.

## लुभ गार्ध्ये ॥ १२९ ॥

गार्ध्यमाकाङ्क्षा । लुभ्यति । लुलोभ लुलोभिथ । लोभिता, लोब्धा । लोभिष्यति । लुभ्यतु । अलुभ्यत् । लुभ्येत् , लुभ्यात् । अलुभत् ॥

लुलुभिषति । लुलोभिषति । लोलुभ्यते । लुलोब्धि ॥

लोभयति । अलूलुभत् ॥

लुभित्वा, लोभित्वा, लुब्ध्वा । लुब्धः — तादौ 'तीषसह' इतीड्विकल्पः । सेटोः क्त्वासनोः 'रलो व्युपधात्' इति कित्त्वविकल्पः । 'यस्य विभाषा' इति निष्ठायां नेट् । 'लुभो विमोहने' इति क्त्वानिष्ठयोर्नित्यं सेट्त्वं विमोहनार्थस्य तौदादिकस्यैव ॥

भूवादेरवृत्करणत्वाल्लोभत इति भवतीत्यात्रेयः ॥

## क्षुभ सञ्चलने ॥ १३० ॥

क्षुभ्यति । चुक्षोभ । क्षोभितेत्यादि । श्यन्भाविभकारानानुरोधादस्येह पाठः । अङ् द्युतादित्वादपि सिद्धः । न चाक्षीभदिति सिज्निवृत्त्यर्थं उपपद्यते ; क्रैयादिकेनावश्यं तस्य रूपस्य भावित्वात् ॥

## णभ तुभ हिंसायाम् ॥ १३१-१३२ ॥

नभ्यति, प्रणभ्यति । ननाभ नेभतुः नेभिथ नेभिव । नभिता ॥

तुभ्यति । तुतोभ । अनयोरपीह पाठः क्षुभेरिव । इमावपि द्युतादौ क्र्यादौ च पठ्येते ॥

## क्लिदू आर्द्रीभावे ॥ १३३ ॥

क्लिद्यति । चिक्लेद चिक्लेदिथ चिक्लेत्थ चिक्लिदिव चिक्लिद्म ॥

क्लेदिता, क्लेत्ता । क्लेदिष्यति क्लेत्स्यति । क्लिद्यतु । अक्लिद्यत् । क्लिद्येत्, क्लिद्यात् । अक्लिदत् ॥

चिक्लिदिषति । चिक्लित्सति ॥

क्लेदित्वा, क्लिदित्वा । क्लिन्नः ॥

चेक्लिद्यते । चेक्लेत्ति । क्लेदयति । अचिक्लिदत् ॥

चिक्लिदम् — इगुपधलक्षणे के, 'क्नुयादीनां के द्वे भवतः' इति के द्वित्वम् ॥

क्लेदा क्लेदानौ — 'क्लेदौषधिशशाङ्कयोः' इति निघण्टुः । 'श्वनुक्षन्' इति कनिनि निपात्यत इति भूवादावुक्तम् । ऊदित्वादक्त्वादाविड्विकल्पः ॥

## मिदा स्नेहने ॥ १३४ ॥

मेद्यति । मिमेद मेदिथ । मेदिता । मेदिष्यति । मेद्यतु । अमेद्यत् । मेद्येत्, मिद्यात् । अमिदत् — 'मिदेर्गुणः' इति श्यनि गुणः ॥

मिमिदिषति, मिमेदिषति ॥

मिदित्वा, मेदित्वा [illegible] मिन्नः । मिन्नवान् [illegible]

[illegible] । [illegible] ' इति [illegible] ॥

भिन्नमस्य, मेदितमस्य, प्रभिन्नः, प्रमेदितः — 'विभाषा भावादिकर्मणोः' इतीड्विकल्पे 'निष्ठाशीङ्' इत्यादिना सेटो निष्ठायाः किस्वनिषेधः। द्युतादिपाठादेव अमिदत्, अमेदिष्टेति सिद्धे पुषादिपाठोऽमेदीदिति निवृत्त्यर्थः। एवं तर्हि द्युतादौ पाठे प्रयोजनं चिन्त्यम्। अनेनामिददिति भविष्यति। द्युतादेरन्यत्रात्मनेपदिषु पाठादमेदिष्टेति च। 'निष्ठाशीङ्' इत्यत्र च हरदत्तः—"'ञि ष्विदा* स्नेहनमोचनयोः' इति दैवादिकस्य ग्रहणम्, न तु 'ञि ष्विदा* अव्यक्ते शब्दे' इति भौवादिकस्य, मिदिना साहचर्यात्" इति। एवं वदतोस्य मिदेर्भूवादौ पाठो नास्तीति प्रतीयते। धातुपाठव्याख्यानेषूभयत्राविगीतं पठ्यते॥

## ञि क्ष्विदा स्नेहनमोचनयोः ॥ १३५ ॥

क्ष्विद्यति। चिक्ष्वेद। क्ष्वेदितेत्यादि मिदिवत्॥

क्ष्वेदतीत्यव्यक्तशब्दे शपि॥

## ऋधु वृद्धौ ॥ १३६ ॥

ऋध्यति। आनर्ध आनृधतुः आनर्धिथ आनृधिव — 'अत आदेः' इत्यभ्यासादेर्दीर्घः। 'तस्मान्नुड्द्विहलः' इति नुडागमः। किद्वचनेषु गुणाभावेपि ऋकारस्थरश्रुत्याश्रयणेन द्विहल्त्वम्॥

अर्धिता। अर्धि[illegible]। ऋध्यतु। आर्ध्यत्। ऋध्येत्, ऋध्यात्। मा भवानृधत्॥

*ख—ञि क्ष्विदा.

आर्दिधिषति ईर्त्सति — 'सनीवन्त' इतीड्विकल्पः । तत्रेटि गुणेजादित्वात् 'नन्द्राः' इति रेफवर्जितस्य द्वितीयस्यैकाचो द्विर्वचनम् । अनिटि तु, 'आप्ज्ञप्यृधाम्' इतीत्वे, रपरत्वे, 'अत्र लोपः' इत्यभ्यासलोपः । 'खरि च' इति चर्त्वे धकारस्य ॥

अर्धयति । आर्दिधत् । णिलोपस्य स्थानिवत्त्वाद्धिशब्दस्य द्विर्वचनम् ॥

ऋद्ध्वा, अर्धित्वा—उदित्त्वादिड्विकल्पः । 'न क्त्वा सेट्' इत्यकित्त्वम् ॥

ऋद्धः । ऋध्यम् — 'ऋदुपधात्' इति क्यप् ॥

अयं स्वादौ च ॥

## गृधु अभिकाङ्क्षायाम् ॥ १३७ ॥

गृध्यति । जगर्ध जगृधतुः जगर्धिथ जगृधिव । गर्धिता । गर्धिष्यति । गृध्यतु । अगृध्यत् । गृध्येत्, गृध्यात् । अगृधत् ॥

जिगर्धिषति । जरीगृध्यते । जर्गर्धीत्यादि ॥

माणवकं गर्धयते वञ्चयतीत्यर्थः — 'गृधिवञ्च्योः प्रलम्भने' इत्यकर्त्रभिप्रायेपि तङ् । अन्यत्र श्वानं गर्धयति गर्धयत्यपि वा गर्धमस्योत्पादयतीत्यर्थः ॥

गृध्नुः — 'त्रसिगृधि' इति क्नुः ॥

गर्धनः — 'जुचङ्क्रम्य' इति युच् ॥

गर्धित्वा, गृद्ध्वा —उदित्त्वादिड्विकल्पः ॥

गृद्धः गृध्रः — 'सुसूधाञ्गृधिभ्यः क्रन्' इति क्रन् ॥

## वृत् ॥

दिवादयः पुषादयश्च वृत्ता इत्यात्रेयमैत्रेयादयः। अन्ये तु-पु-षादेस्समाप्त्यर्थं वृत्करणम् । दिवादयस्त्वपरिसमाप्ता इत्याहुः तेन क्षीयते मृग्यत इत्यादिसिद्धिरिति ॥

शमादय उदात्ता उदात्तेतः ॥

इति पूर्वदक्षिणपश्चिमसमुद्राधीश्वरकम्पराजसुत-
सङ्गमराजमहामन्त्रिणा मायणसुतेन मा-
धवसहोदरेण सायणार्येण विरचितायां
माधवीयायां धातुवृत्तौ दिवादय-
स्सम्पूर्णाः.



# शुद्धाशुद्धपत्रिका.

| पृष्ठे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| २ | १० | क्र्यादि | क्रादि |
| २ | १९-२० | अघसत् अघसतां | अघसत् अघसतां अघसन् |
| | | अघसन् अघसः अघसतं | अघसः अघसतं अघसत |
| | | अघसत अघसं अघसाव | अघसं अघसाव |
| ४ | १९ | तस्तिन् | तस्मिन् |
| ७ | ४ | क्र्यादि | क्रादि |
| १० | २१ | जङान्त | जङ्घान्त |
| १६ | ६ | ब्रह्म | ब्रह्म |
| २४ | १० | दण्डोप | दण्डेनोप |
| ३३ | ६ | लुग्वा | लुग्वा |
| ३७ | ८ | लिह्यत | लिह्यत् |
| ३९ | २ | चचिक्षिध्वे | चचक्षिध्वे |
| [illegible] | ६ | जनानां | जनां |
| [illegible] | १ | ग्रज | गृ |
| [illegible] | ५ | आञ | आङ् |
| [illegible] | १८ | अत्रेयः | आत्रेयः |
| [illegible] | १८ | अञ् | अङ् |
| [illegible] | २२ | न्यङ्क्ता | न्यङ्क्ता |
| [illegible] | ७ | इत्यस्य | इत्यस्य |
| [illegible] | १८ | लुङि | लुङि |
| [illegible] | १३ | मां | मर्म |
| [illegible] | १९ | [illegible] | [illegible] |

| पृष्ठ. | पङ्क्ती. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| १५९ | १० | आयुर्वैदिकः | आयुर्वेदिकः |
| ,, | १३ | तद्धितार्थमित्यस्य | तद्धितार्थ इत्यस्य |
| १६० | २० | क्ङिङित्यजादौ | क्ङित्यजादौ |
| १७४ | ,, | जागरूकः | जागुरूकः |
| १७७ | ११ | दरिद्रियात् | दरिद्यात् |
| १८१ | १७ | शिष्ठिः | शिष्टिः |
| १८७ | १ | ह्रुङ् | वश |
| ,, | १३ | स्फुरु | स्पुरु |
| १८८ | २ | ७० | |
| १८९ | १ | झल | झल् |
| १९२ | ६ | तृन्विधौ 'वृ | 'तृन्विधावृ |
| १९३ | १ | ङिभि | ञिभि |
| १९५ | ८ | भिञः | भियः |
| १९७ | १२ | सिचि | सिचि च |
| २२४ | ७ | १४ | |
| ,, | १३ | १५ | १४ |
| २२६ | १८ | समारं | समारन्त |
| २३२ | २ | अधिदैविकं | आधिदैविकम् |
| २४७ | ९ | व्रीज्यत् | व्रीड्येत् |
| २५१ | १ | सिचि | सिचि च |
| २५७ | २ | अनिट्त्वम् | अनिट्त्वं |
| २५८ | ९ | डुमिङिति | डुमिञिति |
| २६२ | १२ | इङ् | ईङ् |

| पृष्ठ. | पङ्क्ती. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| २७७ | ९ | वृत्रम् | वृत्यम् |
| २७९ | ६ | मर्मष्टि | मर्मर्ष्टि |
| २८९ | १७ | चिण | चिण् |
| २९२ | ४ | व्याघ्र | व्याघ्र |
| २९९ | १८ | विध्यात | विध्यात् |
| ३०० | ११ | अपुपुषत् | अपुषत् |
| ,, | १३ | अपुक्षंत | अपुक्षन्त |
| ३०३ | १७ | शिशक्षति शिशक्षते | शिक्षति शिक्षते |
| ३०६ | १८ | रथादि | रधादि |
| ,, | १९ | रथ | रध एतद्धातुवृत्तौ सर्वत्र धकार एव ज्ञेयः |
| ,, | २० | ररन्थ | ररद्ध |
| ,, | २१ | रेथ्व | रेद्ध्व |
| ३२१ | १९ | इत्यग्नि | इत्यग्नि |